समैर्ऋजुभिरत्युच्चैः समन्तात्सुविभूषितैः ।
स्तम्भैः पक्षैरिवात्युच्चैर्दिवं संप्रस्थितामिव ॥ २१

महत्या कुथयास्तीर्णां पृथिवीलक्षणाङ्कया ।
पृथिवीमिव विस्तीर्णां सराष्ट्रगृहमालिनीम् ॥ २२

नादितां मत्तविहगैर्दिव्यगन्धाधिवासिताम् ।
परार्ध्यास्तरणोपेतां रक्षोधिपनिषेविताम् ॥ २३

धूम्रामगरुधूपेन विमलां हंसपाण्डुराम् ।
चित्रां पुष्पोपहारेण कल्माषीमिव सुप्रभाम् ॥ २४

मनःसंह्लादजननीं वर्णस्यापि प्रसादिनीम् ।
तां शोकनाशिनीं दिव्यां श्रियः संजननीमिव ॥ २५

इन्द्रियाणीन्द्रियार्थैस्तु पञ्च पञ्चभिरुत्तमैः ।
तर्पयामास मातेव तदा रावणपालिता ॥ २६ G 5 13 18 B 5 9 30 L 5 5 51

21 Ñ1 partly illeg for ab —a) V1 ध्वजाभिर्, B1 उज्वलैर् (for ऋजुभिर्) B3 D5.8.11 अत्युग्रै D6 इत्युच्चै (for अत्युच्चै) —b) D8 च, D4 स (for सु) Ñ2 D1-4 T3 G2 विभूषिता (D2.3 °त), Ct as in text (for °षितै) Ś1 D10 समेता च विभूषिता, Ñ2 V B D6 सर्वत समलंकृत (V1 °ता, V2 °त) —c) B1 ध्वजैस् (for पक्षैर्) Ñ2 V1 B D6 यथा (for इव) Ñ1 [अ]त्युग्रैर् (for °च्चैर्) —Ñ1 illeg from 21d up to 22a —d) D1.2.4.11 Ck दिवि D8.9 दिव, Ct m g as in text (for दिव) Ś1 D8.9.10 संप्रस्थितैरपि, Ñ2 V1 B1.3.4 संप्रस्थितै दिव, Cm k t as in text (for °तामिव) V2 दिविव संस्थितैरपि

22 Ñ1 illeg for 22a (cf v l 21) Ś1 D10 om 22ab —a) B1 (m also as in text) कक्ष्यया, D5.11 कुप्यया (for कुथया) Ñ2 V2 B1 D7 [आ]कीर्णं D1.4.8 [आ]रीर्णं (for [आ]स्तीर्णां) —D8 transp b and d —b) B3 लक्षणान्विता, B4 लक्षणाक्षया (sic) (for °णाङ्कया) D3 स ता नूपुरमालिनी —After 22ab, D1 wrongly reads 22b —d) G2 सुराष्ट्र (for सराष्ट्र) Ñ V1 D5.11 माल्यया, D6 पालिनीं, T3 Ct -शालिनीं (for मालिनीम्) Ś1 D10 शाला नूपुरशा (D10 °मा) लिनीं, V2 B2 (marg also) 3.4 सु (B1 स) राष्ट्रगृहमालया B1 स्वाविद्यास्तरणावृता, D1.3.4.6 सराष्ट्रा गृहमालया M1 सुराष्ट्र ग्राममालिनीं

23 a) Ś1 अर्दिता, Ñ2 V1 B D6 उषिता (for नादिता) Ś1 Ñ1 D4.11 यत्र, D1-9.10 यत्र (for मत्त) —b) V2 -गन्धादिवासिता, B1 गंधसुवासितैः, D6 -गन्धविवासिता D11 गन्धैश्च वासिता —B4 om (hapl ?) 23cd —c) Ś1 V2 D1.8.10 [आ]स्तरणैर्युक्ता (V2 °युक्त), Ñ2 V1 B1.3.4 D6 शयनैर्युक्ता, D3.4.11 [आ]भरणैर्युक्ता (for [आ]स्तरणोपेता) —d) G3 रक्षोगण (for रक्षोधिप) D5 निषेविता (for निषेविताम्) Ś1 Ñ1 B1 D1-4.10.11 रक्षोधिपनिसेविता

24 V1 illeg from 24-52 —a) V2 अगुरु-, D5.8 मगुरु (for अगरु) Ś1 Ñ1 D8.10 धूमे (D8 °प) नागुरुधूपानां (Ñ1 °पन) B3 ध्वस्तनामगरुधूपेन D3.8.11 धूपेनागरुणा धाम्ना (D4 धाया) D6 सम्भ्रामागरुधूपेन —b) Ś1 D10 द्वतपाद्गुरा Ñ2 B D6 हसपङ्क्तिभि (for हसपाण्डुराम्) Ñ1 नाना * * * * (illeg) G1 विमलाभा सपाद्गुरा —After 24ab Ñ1 reads a line which is illeg —c) Ś1 D10 पूर्णां D7.8 पत्र (for चित्रा) Ś1 पुष्पोपका ([marg also] °हा)रेण V2 D8 G1 पुष्पोपहारैश्च Ñ1 चित्रमाल्योपहारेण —d) Ñ2 B1.4 D6.10 कल्मषा (B1 °ल्याणा)मिव V2 कल्माषपीव (for कल्माषीमिव) T3 सप्रभा Ś1 कल्मषा सुप्रभामिव, B2 कल्माषामिव च प्रभा, B3 कल्यामिव च सुप्रभा

25 V1 illeg for 25 (cf v l 24) —a) Ñ1 मन प्रहर्ष Ñ2 B1.3.4 D6 मन प्रह्लाद, V2 मन प्रसादि, B2 मन प्रसाद D1 मन सह्लादे (sic), D8 T2 G1 M1 मनसो ह्लाद, D3.9 मनसो मोद, G2 मनसा ह्लाद (for मन संह्लाद) —b) Ś1 D10 कामस्य Ñ2 D6 चित्तस्य (for वर्णस्य) Ñ B1 D7-9 T3 G3 Cg t प्रसाधि (B1 °द्य)नीं P7.8 D1-3.10 M2 प्रसादनीं (for °दिनीम्) D4 रावणस्य प्रसादनीं, T2 वर्णस्यापि प्रसाधिनीं —c) D7 T2.3 M2 शोकनाशनीं Ś1 Ñ2 B D1.6.8.10.11 हत्शोक (D2 °प)नाशि (B1.2 D1.4.11 °श)नीं V2 कृच्छ्रोकनाशिनीं (for ता शोकनाशिनीं) —d) Ś1 Ñ1 D1-4.10 श्रेय D11 सेय (for श्रिय) G1 M2 अपि (for इव) V2 श्वसता जननीमिव ※ Cv 'ततस्ता प्रविश्य' इत्येतन्नारभ्य 'श्रिय संजननीमिव' इत्येतदन्ते वाक्यार्थे प्रथमस्ता शब्द प्रविश्य इत्यनेन सबध्यते। द्वितीयो दृष्टवानेन। ता प्रविश्य ता ददर्शेति। Cg ता शोकनाशिनी मिति। ततस्तामिति वर्तमाने पुनस्तच्छब्द उपसंहाराय। ता प्रति प्रविश्य ददर्शेति वा सबन्ध ※

26 V1 illeg for 26 (cf v l 24) —a) Ś1 G3 इन्द्रियाद् (for इन्द्रियाणि) Ś1 Ñ V2 B D7.8.10 च (for तु) D11 [इ]न्द्रियार्थाश्च D1.3.4 इंद्रियाणां प्रियार्थैश्च —b) Ś1 Ñ1 D8.10 सर्व, Ñ2 V2 B1.3.4 D3.4.11 सम, B2 स्वयं (for पञ्च) —V2 B2 om 26cd —c) D11 तर्पयामास Ñ1 D1-4 सतत D11 स तदा (for मातेव) Ś1 D10 तर्पयन्ती च सतत Ñ2 B2-4 D6 तर्पयन्तीमिव सुहृद् —d) Ś1 Ñ B2-4 D8.10 M1 सदा, D2 सात (corrupt) (for तदा) Ś1 Ñ P2-4 D1.6.8.10 सेविता (D8.10 °तं, D7 °ता) (for पालिता) D1.3.4 रक्षोधिपतिसेवित D11 राक्षसाधिपसेविता —After 26 Ñ2 B2 read 250*, while D3 reads 5 5 36-42b (om 41)

G 5.13.20 B 5.9.30 L 5.5.52

स्वर्गोऽयं देवलोकोऽयमिन्द्रस्येयं पुरी भवेत् ।
सिद्धिर्वेयं परा हि स्यादित्यमन्यत मारुतिः ॥ २७
प्रध्यायत इवापश्यत्प्रदीपांस्तत्र काञ्चनान् ।
धूर्तानिव महाधूर्तैर्देवनेन पराजितान् ॥ २८
दीपानां च प्रकाशेन तेजसा रावणस्य च ।
अर्चिर्भिर्भूषणानां च प्रदीप्तेत्यभ्यमन्यत ॥ २९
ततोऽपश्यत्कुथासीनं नानावर्णाम्बरस्रजम् ।
सहस्रं वरनारीणां नानावेषविभूषितम् ॥ ३०

27 V1 illeg for 27 (cf v l 24) —a) N1 D11 ब्रह्म (for देव) Ś1 D10 स्वर्गार्थं देवलोकार्थम्, D2 ब्रह्मलोकोऽयमिति च —b) D7 8 इन्द्रस्यापि M1 गान्धर्वीय (for इन्द्रस्येयं) Ś1 Ñ B D1-4 8 10 11 इयं सिद्धि परा (Ś1 D10 °द्धिप्रदा)भवेत् (Ñ1 मता), V2 इति सिद्धि परा मता —c) D1 G2 M3 गान्धर्वीय (for सिद्धिर्वेयं) T2 G3 M2 पुरा, G1 M1 पुरी (for परा) D8 सिद्धिर् (for हि स्याद्) ※ Cv स्वर्गोऽयमित्यादि। पाताळ स्वर्गो भौम स्वर्गो वास्ति। तत्र स्वर्गदेवलोकयोर्न पुनरुक्ति। गान्धर्वी अळका।, Cr स्वर्ग इति। स्वर्गश्चिद्वि देवलोकोऽप्यन्तकादिलोक। इन्द्रस्य पुरी वस्वौकसारा शक्रस्येत्युक्ता पूर्वदिगवस्थिता शक्रस्य पुरी प्रसिद्धा। उत्कृष्टतप फलभूतो ब्रह्मलोक।, Cm स्वर्ग पातालादि। देवलोको वायुवरुणादिलोक। इन्द्रपुर्यमरावती। परा सिद्धिरुत्कृष्टतप फलभूतो ब्रह्मलोक।, Cg स्वर्गोऽयमिति। सामान्यत स्वर्गोऽयम्। तत्रापि देवलोकस्त्रयस्त्रिंशद्देवाना लोक। तत्रापीन्द्रस्य पुर्यमरावती। परा सिद्धिर्ब्रह्मण स्थानमित्युत्तरोत्तरोत्कर्ष।, Ct स्वर्गो ज्योतिष्टोमादिफलभोगभूमि। देवलोको वायुवरुणादिलोक। इन्द्रस्य पुर्यमरावती ※—For 27cd, Ś1 Ñ V2 B D2-4 8 10 11 subst while D5 ins after 27

249* इति संचिन्तयामास बहुधा स विलोकयन् ।

[ Ś1 Ñ1 D2 10 बहु चिंतयन् (D2 °या) B1 सुविलोकयन् D1 4 मारुतात्मज D5 बहुवत्तथा D11 कपिपुंगव (for स विलोकयन्) D3 हनुमान्बहुशस्तदा (for the post half) ]

28 V1 illeg for 28 (cf v l 24) —a) V2 मध्यायत, T2 विस्मापित, Cr m g k t as in text (for प्रध्यायत) B1 सदा (for इव) Ś1 D10 प्रध्यायत्येव चा (D10 वा)पश्यत् —Ñ1 illeg for 28bcd —b) D7 8 11 G1 M1 Ck प्रदीप्तान्, Ñ2 B D5 दीपांस्तत्र च (B4 स) काञ्चनान् ※ Crg प्रध्यायत इव निश्चलतया प्रकृष्टध्यानयुक्तानिव।, Cm प्रध्यायत इव ध्याननिष्ठानिव। अध्यायत इति पाठे अरिति प्रकाशसंभारासंभ्रलागच्छत इव स्थितान्।, Ck प्रध्यायत इति द्वितीयाबहुवचनम्।, Ct प्रध्यायतो ध्याननिष्ठान् ※—cd) D2 8 11 धूर्तामिव Ś1 D10 देवतैर्, Ñ2 V1 B1 देवनेषु (for °नेन) D4 8 11 पराजितौ, B2 धूपानि पद्मने सम्यक्समयर्ते सपराजितान् (sic)

29 For sequence in V2 cf v l 9 V1 illeg for 29 (cf v l 24) —a) V2 B4 तु (for च) —b) Ś1 Ñ1 V1 B1 D2-4 10 श्रिया चातुल्या (V2 चातुल्य (subm) D4 चातुल्यया) तथा (D2 °था) D11 श्रिया वत्सलया तथा —c) D1-8 11 M1 अर्चिर्भिर् (for अर्चिर्भिर्) Ś1 Ñ1 V2 D3 तु (for च) —d) D6 च सम्यत (for [अ]भ्यमन्यत) Ś1 D10 दीप्त(D10 °प्त)दीप्तामसन्यत, V2 D2 प्रदीप्तामामसन्यत (V2 °दयत), B4 D1 3 4 ता प्रदीप्तामसन्यत, D11 ता प्रदीप्तेति मन्यते —For 29 Ñ2 (reads after 26) B1-3 D6 subst, V1 ins after 30 while B4 ins after 26

250* राक्षसेन्द्रप्रभावेन श्रिया चातुलया तथा ।
अर्चिषा भूषणाना च ज्वलन्तीमिव सर्वत ।

[ (l 1) Ñ2 B D6 प्रभावेण B1 तया (for तथा), B2 चापि विभूतिर्वा (for चातुलया तथा) —(l 2) V2 B1(marg) 2 अर्चिभिर् (for °चिषा) B4 च शशाङ्कस्य (for भूषणाना च) B3 कामिनी (for सर्वत) V1 ज्वलद्भिरिव सर्वश (for the post half) ]

—After 29 Ś1 Ñ1 V2 B4 D1 2 4 5 6 10 11 ins

251* काञ्चनैरुज्ज्वलैर्दीप्तैः समन्तादवभासिताम् ।
कपाटजालैर्विततैरुद्वमन्तीं प्रभामिव ।
तां तदा प्राविशद्धृष्टो हनूमान्मारुतात्मज ।
नि शब्दपदविक्षेपैर्दूरात्प्रणिहितेक्षण ।

[ D6 om l 1 —(l 1) V2 मञ्जुलैर् (for उज्ज्वलैर्) Ś1 D10 दूरात्प्रणिहितेक्षण (for the post half) —Ñ1 (partly) illeg for l 2 —(l 2) Ś1 N1 V2 D4 कपाट (for कपाट-) Ś1 B4 D2 विपुलैर् D10 विपुलैर् (for विततैर्) V2 D1 2 4 5 उद्वमती, B1 उज्ज्वलती, D10 उद्वसती (for उद्वमन्ती) D11 वदन्ता प्रजासेव (for the post half) —(l 3) B4 पुरीं (for ताम्) Ñ1 तत्र ताम् (by transp), D1 4 तदा स (for तां तदा) Ñ1 आविशद् (for प्रा°) Ś1 N1 D10 पवनात्मज (for मारुता°) —(l 4) Ñ1 -पदनिक्षेपाद्, V2 पदनिक्षेपो B4 पादविक्षेपो, D1 4 -पदनिक्षेपैर् (for °विक्षेपैर्) Ś1 D10 दूर (for दूराद्) Ś1 [इ]क्षणी ]

—Thereafter V2 reads 3cd and 6-9 —After 29, D2 ins a passage relegated to App I (No. 3)

30 V1 illeg for 30 (cf v l 24). —a) Ś1 Ñ1 D1-4 11 अथ V1 तत्र (for ततो) Ś1 D10 कचाकीर्णं, Ñ1 D11 कुथास्तीर्णं V2 कुथस्तीर्णं D2 कथाकीर्णं (sic), D7 सुखासीनं (for कुथासीनं) —b) D11 नानागंधावहस्रजं ※ Cr नानावर्णाम्बरस्रजम्। नानावर्णा अम्बरस्रजो यस्य तत्। स्रक्शब्दस्य हलन्तात्वाद्टाबन्तत्वे वा। भा?)गुरिमते सिद्धम्।, Cg नानावर्णाम्बरस्रजमिति हलन्तस्य स्रक्शब्दस्य भागुरिमतेन टाबन्तत्वादकारान्तत्वोपपत्ति ※ —After 30ab, D3 ins

252* स्वैरैव तासां सुप्त राक्षसानां च सद्यम् ।

परिवृत्तेऽर्धरात्रे तु पाननिद्रावशं गतम् ।
क्रीडित्वोपरतं रात्रौ सुष्वाप बलवत्तदा ॥ ३१
तत्प्रसुप्तं विरुरुचे निःशब्दान्तरभूषणम् ।
निःशब्दहंसभ्रमरं यथा पद्मवनं महत् ॥ ३२
तासां संवृतदन्तानि मीलिताक्षाणि मारुतिः ।
अपश्यत्पद्मगन्धीनि वदनानि सुयोषिताम् ॥ ३३
प्रबुद्धानीव पद्मानि तासां भूत्वा क्षपाक्षये ।
पुनः संवृतपत्राणि रात्राविव बभुस्तदा ॥ ३४
इमानि मुखपद्मानि नियतं मत्तषट्पदाः ।
अम्बुजानीव फुल्लानि प्रार्थयन्ति पुनः पुनः ॥ ३५ G 5 11 27 B 5 9 36 L 5 5 62

—$^{cd}$) D8 सदृश Ś1 Ñ1 D1-10 11 सहस्रमेव(D11 °क) (for सहस्र वर) G1 3 -वण (for वेष) Ś1 Ñ1 D10 वेशचय(D10 °य)त्रिया D1 3 11 वरधरश्रिया(D3 °त्रिया) D8 -वेषवयस्त्रिया (for -वेषविभूषितम्) D8 वराभरणभूषित (for $^{d}$) V2 शयनीय परार्ध्ये च स्त्रिय दानसहस्रक —For 30 Ñ2 B D8 subst

253* कुथास्थापश्यदासीना नानावर्णाम्बरस्रजम् ।
नारी सहस्रशस्तत्र नानावेषोज्ज्वलत्त्रिय ।

[ (l 1) Ñ2 D8 कुथास्तपश्यद् B1 कथा-(?)श्च (after corr in also कुथास्तपश्यद्) B3 कुथयापश्यद् B3 नानाव(?) सुरत्न (for the post half) —(l 2) B2(m as in B4) -वेश B4 -वण (for वेष) B3 [स]त्रिय (for त्रिय) —After 30 V1 reads 250*

31 V1 illeg for 31 (cf v l 24) —$^{a}$) Ś1 V1 V2 B1 2 4 D2 4 10 परावृत्त, B3 परावृत्त (for परिवृत्त) B2 च (for तु) D1 4 11 परावृत्ता(D11 °त्य [sic]) धरात्रेण —$^{b}$) V2 ह्रासौ D8 तत्र T2 पानात् (for पान) B4 गता (sic) (for गतम्) —$^{c}$) Ś1 Ñ1 D1-4 10 11 क्रीडना(Ñ2 D3 °डिता)द्विरत (for क्रीडित्वोपरत) Ś1 D1 10 सर्वा, Ñ1 मुख, D1 3 4 श्रान्त D11 रम्य (for रात्रौ) Ñ2 B1 (marg) D6 क्रीडि(D6 °ड) तोपरतश्चैर्ण(B1 [orig]°त वामि) V2 क्रीडत परम स्वर्ग —$^{d}$) Ś1 Ñ2 B D1 2 4 6 7 9 10 G Ck t प्रसुप्त Ñ1 सुष्वाप V2 प्रवास्त D8 सुषुपे (for सुष्वाप) Ś1 Ñ1 Ñ1 सुष्वाप V2 प्रवास्त D8 सुषुपे (for सुष्वाप) (V2 reads D3 10 बहुलं तत Ñ2 V2 B1 2 4 D6 बहुधा तदा (V2 reads तदा in marg), B3 वरशय्यया D1 3 4 समत्र° (for बलवत्तदा) D11 जन सुबहुल शत

32 V1 illeg for 32 (cf v l 24) —$^{a}$) Ś1 D10 तत्र सुप्त Ñ1 ***म (illeg) D3 स च सुप्त Ct as in text (for तत्प्रसुप्त) M1 प्रविषसौ (for विरुरुचे) V1 V2 B D6 प्रसुप्तविहग चैत्र D11 तत प्रसुप्तं ररच —$^{b}$) V2 B1 2 D1-4 8 11 [र्श]बर (for [भ]न्तर) D7 9 भूषित (for भूषणम्) Ś1 Ñ1 D10 नि शब्द वरभूषण —$^{c}$) D3 निलीन (for नि शब्द) —$^{d}$) V1 V2 B D6 बभौ D11 यथा (for यथा) V1 V2] D11 यथा D1 4 8 तथा (for यथा) महत्)

33 V1 illeg for 33 (cf v l 24) —$^{a}$) V2 समुप Cr m g k t as in text (for संवृत) Ś1 V2 B D2 3 8 10 11 दंष्ट्राणि D1 °त्रानि Cr m g l t as in text (for दन्तानि) D1(or g) 9 मुद्रित(P1 [m also मवृत, B3 मुक्त)दष्ट्राणि D8 स वृत्तदन्तानि (for संवृतदन्तानि) —$^{b}$) Ś1 V1 V2 B1 D3 4 8-10 T1 2 Ck t मीलितांक्षाणि, M2 निमीलाक्षाणि (for मीलिताक्षाणि) ✲ Ck निद्रा(?)गतत्वात् संवृतदान्तानि संवृतपक्ष्माणि म्लानिदस्तु(म्लानिच ?)रोग्न मीलिताक्षीणीति । मतिसवृतपक्ष्माणि । स्वगदस्लोकादिवरमवृत्त मीलितानेरपि कल्प्यो भेद इत्युक्तमेव । अपि वा वर्णना । मयेत्त पौनरुक्त्यमवश्यमित्येवोपम परिहार । तथ्यिन्ताया व्याख्या तृणाम(तृणा ?)व्याख्यानमर्थस्वलितमयात् । अपि च नेदं सूत्रे माप्यान्कि वा । येन प्रयोजनानि चिन्त्येत(°न्येरन् ?) । अपि च काव्यमर्वदम् । तत्र च न कनापि (कर्तुं ?) शक्या पदप्रयोजन चिन्ता । Ct निद्रित वा मवृतानि सवृतपक्ष्माणि तादृशानि च तानि दान्तानि म्लानानि मीलिताक्षीण्यानिमवृतपक्ष्माणि स्वर्गेन्द्र लोकाद्रिव मवृतमीलितयोरपि भेदो बोध्य । यद्वा मवृतदान्ता नीयस्यैव व्याख्यान निमीलिताक्षीणीति । यद्वा मवृतच मोष्ठयो ✲ —$^{c}$) Ś1 D10 पद्मपत्रानि, D4(m also) वक्त्रपद्मानि (for पद्मगन्धीनि) —D8 reads 33$^{d}$ in marg —$^{d}$) Ś1 V2 B D2 3 4 10 स योषिता

34 V1 illeg for 34 (cf v l 24) D4 om 34 —$^{a}$) D3 प्रसुप्तानीव D6 प्रबुद्धानीव —$^{b}$) B3 निशि M2 पुरा (for तासा) Ś1 V1 V2 B D1 4 6 10 11 उद्धृत्य (for भूत्वा) Ñ2 B1 4 D2,5 8 10 क्षपाक्षये Cr m g k t as in text (for °क्षये) D3 तन्मुखानि क्षपाक्षये —$^{c}$) Ś1 D10 11 T2 G1 2 M1 Ck सहृत D3 समूढ, Cr m g as in text (for संवृत) D3 गात्राणि (for पत्राणि) —$^{d}$) D3 रात्रावथ Ś1 D10 यथा तथा D3 बभौ तत्र (corrupt) T2 स्वमतथा Cr m g k t as in text (for बभुस्तदा) D3 गात्राणि विबभुस्तथा D11 रात्रौ विरमबुस्तथा —For 34$^{cd}$ Ñ2 V2 B D6 subst

254* तदा वै कुसुमानीव वदनानि विलोक्य स ।

[ Ñ2 B2 D6 तदा तु B4 तत्र (for तदा वै) B3 कुन्दानि (for कुसुमानि) B2 ह योषिता (for विलोक्य स) ]

35 V1 illeg for 35 (cf v l 24) —$^{a}$) Cr इमानीं (for इमानि) Ś1 Ñ V2 B D1-4 10 11 वक्त्र(V2 रक्त) पद्मानि D8 बहुपद्मानि Cr m g t as in text (for मुख°) —$^{b}$) V2 B D6 प्रिय D3 तत्र D10 स तु T2 पद्म (for मत्त) Ś1(before corr as in text) D10 षट्पद, D8 नियतवितरद्वना —$^{c}$) D6 अम्बुजानीव (for अम्बुजानीव) D3 पद्मानि (for फुल्लानि) Ś1 Ñ1 D1 4 10 11 अम्बुजानीति

G 5 13 28 B 5 9 39 L 5 5 63 इति वामन्यत श्रीमानुपपत्त्या महाकपिः ।
मेने हि गुणतस्तानि समानि सलिलोद्भवैः ॥ ३६
सा तस्य शुशुभे शाला ताभिः स्त्रीभिर्विराजिता ।
शारदीव प्रसन्ना द्यौस्ताराभिरभिशोभिता ॥ ३७
स च ताभिः परिवृतः शुशुभे राक्षसाधिपः ।
यथा ह्युडुपतिः श्रीमांस्ताराभिरभिसंवृतः ॥ ३८
याश्च्यवन्तेऽम्बरात्ताराः पुण्यशेषसमावृताः ।
इमास्ताः संगताः कृत्स्ना इति मेने हरिस्तदा ॥ ३९
ताराणामिव सुव्यक्तं महतीनां शुभार्चिषाम् ।
प्रभावर्णप्रसादाश्च विरेजुस्तत्र योषिताम् ॥ ४०
व्यावृत्तगुरुपीनस्रक्प्रकीर्णवरभूषणाः ।
पानव्यायामकालेषु निद्रापहृतचेतसः ॥ ४१
व्यावृत्ततिलकाः काश्चित्काश्चिदुद्भ्रान्तनूपुराः ।
पार्श्वे गलितहाराश्च काश्चित्परमयोषितः ॥ ४२

(Ñ1 D1.4.11 °व) मन्वाना (D10 सधाना) —d) Ś1 B3 D2.3.10.11 प्रार्थयते, T2 प्रासवत (for प्रार्थयन्ति) ⊛ Cr प्रार्थयन्ति प्रार्थयेरन् । नियत नूनम् ।, Cm प्रार्थयन्ति प्रार्थयेरन् । नियत नूनम् । 'प्रार्थयन्त' इति पाठे प्रार्थयमाना भवेयुरिति शेष ।, Cg प्रार्थयन्ति प्रार्थयेरन् । मधुरमलुब्धतयात्र पुन पुन पतेयुरित्यर्थ । व्यत्ययेन परस्मैपदम् । अनुदात्तत्वेनात्मनेपदत्वात् । नियत नूनम् ।, Ck t नियत नित्यम् ⊛

36 V1 illeg for 36 (cf v l 24) —a) Ś1 V3 D3.5.8 G1.3 [इ]व (for वा) D11 [इ]वामन्यते, G2 M1.2 चामन्यत (for वामन्यत) Ñ2 B D6 इत्यमन्यत स श्रीमान् —b) Ś1 Ñ1 D10.11 M1 उत्पत्य च (D10 स) Ñ2 B2 (m after corr) 3.4 D6 तान्यालोक्य, V2 उत्प्लुत्य स, B1 (m also तद्विलोक्य) ता विलोक्य, D1.4 उपेत्य स, T2 G उपपत्य (G3 °द्य) Cr m g t as in text (for उपपत्त्या) D1 महान् (for महा) D2 उत्पत्य सहसा कपि D3 उपेत्याभिमुख तदा —c) B2 सम (for मेने) N1 च (for हि) D2 द्विगुणतस्, D11 च गुणतस् (for हि गुणतस्) —d) D11 समान (for °नि)

37 V1 illeg for 37 (cf v l 24) —a) D2 तत (for ताभि) —M1 om 37cd —) B1 (after corr in m) D1-5.7.9.10 T1 G1 M2 शरदीव (for शारदीव) —d) Ñ2 V2 B D1.2.4.6.11 उपशोभिता, T2.3 इव शोभिता, G1 अभिसंवृता (for अभिशोभिता)

38 V2 illeg for 38 (cf v l 24) —a) Ś1 Ñ V3 B D1-4.6.10.11 तासि परिवृत शूर (Ñ2 V2 B D6 स्त्रीभि) —b) Ś1 Ñ1 D1.4.10.11 M1 राक्षसेश्वर, Ñ1 B D6 राक्षसस्तदा (B2 °था) —D11 om 38cd —c) Ñ2 V2 B D6 तारापति, D2 ताराधिप, T2 चोडुपति (for ह्युडुपति) —d) Ś1 D10 परिवारित, Ñ1 D5.7.9 G1 इव संवृत Ñ2 V2 B D1.4.6 उपशोभित D2 इव शोभित, D3 अभिसंवृत (for अभिसंवृत)

39 V1 illeg for 39 (cf v l 24) Ś1 D10 om 39ab —a) N1 या***आत्तारा (illeg) D1.4 याश्च्युता ह्यम्बरात्तारा, D2.6.11 G3 याश्च्यवन्त्यम्बरात्तारा, D3 याश्च्युता नभसस्तारास् —b) N1 V2 D2.4.11 काले काले निराकृता, N2 B D6 तत्र मन्ये (B2 °र्ये) निराकृता —c) Ś1 Ñ1 V2 D1.2.4.10.11 सर्वा, D3 तारा (for कृत्स्ना) —Ś1 D10 om 39d-41a —d) D1.2.4.11 तत्रामन्यत वै हरि —After 39 B3 ins

255* संवन्ते कुङ्कुमानीव वदनानि विलोक्य ते ।

40 V1 illeg for 40 (cf v l 24) Ś1 D10 om 40 (cf v l 39) B1 om 40ab —a) Ñ2 V2 B1.2.4 D1.2.4.11 हि व्यक्त, D2 सुवर्णे (for सुव्यक्त) D6 तारागणमिव व्यक्त —b) D11 महती च (for महतीना), N1 illeg B1 सुवर्चसा, B2 (after corr as in text) सुरार्चिषा, D1-4.11 महार्चिषा (for शुभार्चिषाम्) —V2 om 40c-43 —c) B1 प्रभाव तद्-, B4 प्रभावाच, D3 प्रभावर्हि (for प्रभावर्ण) B3 प्रसादात्, T1.3 G2 प्रभावाश् (for प्रसादाश्) M1 प्रसादार्चिर् B3 प्रभावर्णा प्रसादश्च, D2 प्रभावर्णा प्रभाद्र (sic) —d) B4 चापि (for तत्र) B3 विवेकाचापि (for विरेजुस्तत्र)

41 V1 illeg for 41 (cf v l 44) Ś1 D10 om 41a (cf v l 39) V2 om 41 (cf v l 40) —a) D1.3 G1 Ct वक्र, D8 कुच, Cr m g as in text (for गुरु) Ñ B D6 व्यावृत्त (B4 °त्ता) शिरसस्तत्र, D1-4 व्यावृत्तगूढ़ि (D3 °गोपि) तस्त्रस्ता, D11 व्यावृत्त गूहन्त शास्त्रा (sic) —b) Ś1 Ñ2 B D1-4.6 [अ]वर (for वर) D10 प्रकीर्णा स्वरभूषणा ⊛ Cr व्यावृत्तगुरुपीनस्रगाश्च ता प्रकीर्णवरभूषणाश्चेति कर्मधारय ⊛ —c) Ś1 D1.2.4.10 -कालिश्च, N1 -काले च, Ñ1 B D6.8 -विधाश्च, G2 लोलाक्ष्यो, Cv m g t as in text (for -कालेषु) D11 यातव्या यामकाले च —d) Ś1 Ñ D1-9 Ct -[अ]पहृत, B1 D3.6.10 G3 [अ]पहृत, Cg as in text (for [अ]पहृत) D1 निद्रामभूतचेतना, D6 निद्रया हृतचेतस

42 V1 illeg for 42 (cf v l 24) V2 om 42 (cf v l 40) —a) Ś1 N D1.3.4.10.11 नि(Ñ2 वि)वृत्त, B व्यामृष्ट, D2 हुवृत्त, D6 विसृष्ट, Cg t as in text (for व्यावृत्त) D10.11 तिलका काचित् —b) D3 om (hapl) D10.11 काचिद् (for काश्चिद्) Ś1 D1.8.10 उत्सृष्ट, N1 illeg N2 अपात, D2.11 उत्कृष्ट, Cr m g t as in text (for उद्भ्रान्त) D10.11 नूपुरा —cd) B2 D1.2.4 पार्श्वाद् (for पार्श्वे) N2 B1(m) 2.4 D2.6 पार्श्वागलित (B1 [before corr] °कुलित) T2 पार्श्वाद्गलित

मुक्ताहारवृताश्चान्याः काश्चित्प्रस्रस्तवाससः ।
व्याविद्धरशनादामाः किशोर्य इव वाहिताः ॥ ४३
सुकुण्डलधराश्चान्या विच्छिन्नमृदितस्रजः ।
गजेन्द्रमृदिताः फुल्ला लता इव महावने ॥ ४४
चन्द्रांशुकिरणाभाश्च हाराः कासांचिदुत्कटाः ।
हंसा इव बभुः सुप्ताः स्तनमध्येषु योषिताम् ॥ ४५
अपरासां च वैडूर्याः कादम्बा इव पक्षिणः ।
हेमसूत्राणि चान्यासां चक्रवाका इवाभवन् ॥ ४६
हंसकारण्डवाकीर्णाश्चक्रवाकोपशोभिताः ।
आपगा इव ता रेजुर्जघनैः पुलिनैरिव ॥ ४७
किङ्किणीजालसंकाशास्ता हेमविपुलाम्बुजाः ।
भावग्राहा यशस्तीराः सुप्ता नद्य इवाबभुः ॥ ४८  G 5 13 0 B 5 9 51 L 5 5 74

(for पार्श्व गलित) G3 गिरेतुस्तत्र योषित (for $^d$) D11 पार्श्वे गलितहाराश्च काचिदुरयोषित

43 V1 illeg for 43 (cf v l 24) V2 om 43 (cf v l 40) B3 om $43^{ab}$ Ñ1 mostly illeg for $43^a$ —$^a$) D8 T2 3 M2 3 Cg मुक्ताहाराहृताश्च (for °रवृताश्च) Ś1 D1 2 4 10 मुक्तसा(D1 4 प्रमुक्त)रसना काश्चिद्, D3 मुक्ता सारसना काश्चिद्, D11 मुक्तसरशना काश्चिद् —$^b$) Ñ1 हि स्रस्त, D1 1 4 5 9 प्र स्रस्त, T1 M1 स(M3 वि)स्रस्त (for प्रस्रस्त) —For $43^{ab}$, Ñ2 B2 3 4 D6 subst

256* मुक्ता सरसना काश्चित्काश्चिदामुक्तनूपुरा ।

[B1 मुक्तरसना, B3 मुक्तवसना (for सरसना) B4 स्रस्तसवसना B4 उद्भ्रान्तलोचना, D6 आयुक्तनूपुरा (for आमुक्त°)]

—$^c$) Ś1 Ñ1 D10 विमृद्ध, Cr m g k t as in text (for व्याविद्ध) Ñ2 B3 -वसना B1 2 D1-8 -रसना (for -रशना) Ñ2 B3 यामा D8 व्यावद्धवसनादार्या, D11 प्रमुक्तरसना यामा —$^d$) G1 इति (for इव) Ñ2 B D4 चापरा, D3 11 वासिता (for वाहिता)

44 V1 illeg for 44 (cf v l 24) —$^a$) Ñ1 V3 D1 2 4 5 9 11 श्व(V2 D2 11 स)कुण्डल (for सुकुण्डल) —Ñ1 illeg for $44^b$ —$^b$) D2 10 विभिन्न, M3 विच्छिन्न (for विच्छिन्न) B3 विमद (for मृदित) D1-9 विच्छिन्ना मृदित —$^c$) D6 मृगेन्द्र (for गजेन्द्र) Ś1 D10 -मथिता, B3 -मृदिता, D3 मर्दिता (for -मृदिता) V2 कीर्णा, D11 फुल्या (for फुल्ला)

45 V1 illeg for 45 (cf v l 24) —$^a$) Ś1 Ñ V3 B D1 4 6 10 नि(B2 दि)कराभा(D3 °राभा)श्च, D11 निकराभाश्च G2 किरणनाभा (for किरणाभाश्च) —Ñ1 illeg for $45^b$ —$^b$) D7 9 G1 उत्कटा Cg as in text (for उत्कटा) B3 हारा राधवराजिभि —$^{cd}$) G1 तनु, Cg as in text (for इव) G3 -मध्ये तु (for मध्येषु) M3 स्तनमध्ये सुयोषिता —For $45^{cd}$, Ś1 Ñ V1 B D1-4 6 10 11 subst

257* स्तनमध्येषु सुप्तानां निरेजुर्हंससंनिभा ।

[Ñ2 B2 4 निरयस्ता (for सुप्तानां) V2 B3 D6 स्तनम ये सुविन्यस्ता(V2 [m also] °स्तीर्णा) B1 स्तनमध्येषु सुविन्यस्ता D1 2 4 11 स्तनमध्ये सु(D2 11 प्र)सुप्तानां (for the prior half) Ñ2 B1 2 4 D6 पाण्डु(D6 °डु)रा B3 -नरय (for -संनिभा)]

46 V1 illeg for 46 (cf v l 24) —$^a$) V3 इतरासां, B1(m also as in text) सुप्तानां (for अपरासां) Ñ1 G3 तु (for च) —V1 illeg for $46^{bcd}$ —$^b$) V3 B4 D10 कल्पा —$^d$) Ñ2 B D6 G3 [आ]बभु, V3 [आ]सुरा (for [इ]वाभवन्) D2 10 11 चक्रवाक इवा भवत् ॥ Ck कादम्ब कलहंस । हेमसूत्राणि चेति । तत्रापि स्तनमध्योद्गतानीत्यनुषङ्गः । चक्रवाकाना पीतवर्णत्वसाम्यादुपमा । Ct वैडूर्या वैडूर्यमणिमाला । कादम्बा कलहंसा । अत्र कादम्बशब्देन कारण्डवपदवाची जलकाक उच्यते । अन्यथा वैडूर्योपमानत्वमसंगत स्यात् । हेमसूत्राणि च । अत्रापि स्तनमध्योद्गता नीत्यनुकृष । चक्रवाकाना पीतत्वसादृश्यादुपमानत्वम् ॥ —After 46 B3 ins

258* मृदङ्गेषु च कासांचित्करा सुनिरता इव ।

47 V1 illeg for 47 (cf v l 24) —$^a$) B3 -वन, D7 8 [उ]पेताश्च (for [आ]कीर्णाश्च) —Ñ1 illeg for $47^d$ —$^d$) Ñ2 V3(m also as in text) B1-3 D6 पुलिनोपमै (for °नैरिव) B4 घनैश्च पुलिनैरपि

48 V1 illeg for 48 (cf v l 24) —$^a$) Ś1 V3 D2 10 11 -शादिक्वास, Ñ1 ना-कर (illeg) Ñ2 D6 निवासास B1 -सोत्कृष्टास, B2 3 D3 -सोत्कोशास B4 -शोभाख्यास D1 4 मालिन्य D5 G3 M3 Cv m g सकोशास, T2 शैवालास, G2 सनीलास Cr k t as in text (for सकाशास) —$^b$) D5 M3 हैम D6 इव (for हेम) Ś1 D3 10 तिल(D3 °लि [meta])कान्विता Ñ1 V2 D11 तिलकाङ्किता Ñ2 B D3 4 तिलकबुजा M1 विमलाम्बुजा (for विपुलाम्बुजा), D1 4 सामोदास्तिलकाङ्किता T2 G1 ता पद्मकनकाम्बुजा —$^c$) Ñ1 हारग्राह Ñ2 D6 कान्चीग्राहा D3 भावग्राह (for भावग्राहा) Ś1 D2 10 भावग्राहो(D2 10 °ग्राहो)यशस्तीरा V3 हारग्राहा हयस्तीरा (sic) B1 (m also as in text) काञ्चीग्राहा सुजघना B2 3 काञ्चीग्राहाय(B3 [m also] काञ्चग्राह)घनतीरा B4 काञ्चीग्राहा मनस्तीरा, D1 4 भावग्राहा सुजघना D11 कान्चिग्राहसुजघना —$^d$) B1 G2 सुप्त D3 सुप्यन् (for सुप्ता) Ś1 Ñ V3 B2-4 D1-4 5 10 11 [आ]भवन् (for [आ]बभु) ॥ Cg किङ्किणीति । किङ्किणीजालमकोशा किङ्किणीजालमेव मकोशा मुकुलानि यासा ता । एतत्स्थाने सकोशा इति पाठान्तर

G 5 13 39 मृदुष्वङ्गेषु कासांचित्कुचाग्रेषु च संस्थिताः ।
B 5 9 52 बभूवुर्भूषणानीव शुभा भूषणराजयः ॥ ४९
L 5 5 75 अंशुकान्ताश्च कासांचिन्मुखमारुतकम्पिताः ।
उपर्युपरि वक्त्राणां व्याधूयन्ते पुनः पुनः ॥ ५०
ताः पताका इवोद्धूताः पत्नीनां रुचिरप्रभाः ।
नानावर्णसुवर्णानां वक्त्रमूलेषु रेजिरे ॥ ५१
ववल्गुश्चात्र कासांचित्कुण्डलानि शुभार्चिषाम् ।
मुखमारुतसंसर्गान्मन्दं मन्दं सुयोषिताम् ॥ ५२
शर्करासवगन्धः स प्रकृत्या सुरभिः सुखः ।
तासां वदननिःश्वासः सिषेवे रावणं तदा ॥ ५३

दर्शनात्सकोशशब्दो मुकुलवाचीत्यवगम्यते ।, Ct किङ्किणी जालसकाशात्द्वन्मुकुलितनयनास्तस्थाने च नद्या मुकुलित कुमुदानि । हेमविपुलाम्बुज वेन वक्त्रनिगरणमुपमाने तु न निगरणम् । "किङ्किणीजालसबाधा" इति पाठे किङ्किणीजाल सबाधत्वमुभयत्रापि स्पष्टमेव । शब्दवत्साधर्म्यात्किङ्किणी शब्देन रहरीणामप्युक्त । भावा विलासा एव स्वामिकसुरतभावो वा ग्राहो यासां ता । यशोऽतिगुणवद्कृतयश एव तीर यासां ता । यश शब्देन लक्षणया कान्तिरित्यन्ये ॐ

49 V1 illeg for 49 (cf v l 24) —a) V3 B3 मृद्गेषु (B3 °षु च) B2 (m also as in text) मृद्वङ्गेषु च, G1 मृदुष्वकेषु (for मृदुष्वङ्गेषु) —Ñ1 illeg from कासा up to स in b (see var) —D11 om (hapl) 49b–52a —b) Ś1 D10 प्रतिरूप समुत्थत Ñ1 V1 D4 प्रतिरूप स(Ñ1 illeg up to स)मुस्थित, Ñ2 प्रतिरूपमुपस्थिता, B1 अप्रत समुपस्थिता, B2 उद्यत समुत्थिता, B3 सुन्यस्तवरभूषणा, B4 उद्यतसमुत्थिता, D1 8 प्रतिरूप समुत्थिता (D2 °त), D3 सभोगोत्था समतत, D5 प्र*रूप**स्थिता —c) D5 भ्रमराणि (for भूषणानि) Ś1 D10 तासां बभुर्भूषितस्तना, G1 बभूवुभ्रमरामाश्च —d) D6 8 शुभ्रा (for शुभा) V3 [आ] भरण (for भूषण) ॐ Cv भूषणराजय । भूषणधारणमार्ग रेखा ।, Cr m भूषणराजय । भूषणविमर्दजनितरेखा । त्रिस्तभूषणानां कासांचिद्भूषणस्थानरेखा भूषणानीव बभूवु रित्यर्थ । Cg भूषणराजय । भ्रमराणीव भ्रमरा इव । व्यत्यय आर्ष । कामुका इव बभूवु । "भ्रमर कामुके भृङ्गे" इति दर्पण । केचित्तु भूषणानीति पाठ कल्पयित्वा भूषणराजयो भूषण विमर्दकृतरेखा । त्रिस्तभूषणानामपि कासांचिद्भूषणानीव बभूवुरित्यर्थ इत्याहु ।, Ck भूषणाना राजय इत्यनेन वैडूर्य मणिमाला । भ्रमराणीवेति वचनसामर्थ्यात् । Ct भूषणानयो विमर्दजनितरेखा । 'भूषणराजय ' इति पाठेऽप्ययमेवार्थो लक्ष णादिना बोध्य ॐ

50 V1 illeg for 50 (cf v l 24) D11 om 50 (cf. v l 49) —a) T2 अशुकाद्या —Ñ1 illeg for 50b —b) Ñ2 V3 B1 3 4 D1 2.4 5 पट्टिता, B3 D3 -पट्टिका (D3 °शा) D5 -कल्पिता (for -कम्पिता) —c) Ñ2 B D4 वस्त्राणि (for °णा) —d) V3 व्याधूयत, D10 व्याधूयेते (for व्याधूयन्ते) ॐ Cr अंशुकान्ता इति । उपर्युपरि वक्त्राणाम् । षष्ठीयोग आर्षे । वक्त्राण्युपर्युपरीत्यर्थ । व्याधूयन्ति चलन्ति । व्यत्ययेन श्यन् । अंशुकान्ता व्याधूयन्त इत्यनेनांशुकान्तानां मृदुसूक्ष्मता द्योत्यते ।, Cg अंशिवाति । मुखमारुतकम्पिता अंशुकान्ता सूक्ष्मवस्त्रदशा । उपर्युपरि वक्त्राणां वक्त्राण्युपर्युपरि । "धिगुपर्यादिषु त्रिषु । द्वितीया ऽऽम्रेडितान्तेषु" । इति द्वितीयाभाव आर्षे । व्याधूयन्त इति यगार्षं । धूनाते कथान्दित्वात् ।, Ct वक्त्राणामुपर्युपरी त्यन्वय ॐ

51 V1 illeg for 51 (cf v l 24) D11 om 51 (cf v l 49) Ñ2 B D6 om 51 —a) G1 का (sic) Cr m g t as in text (for ता) D7 8 [क्षा]धूता (for [द्धू]ता) M2 पताका इव चोद्धूता ॐ Cr ता इति । अंशुकान्ता । विधे प्राधान्यात्स्त्रीलिङ्गनिर्देश ।, Cg ता इति । विधेयत्वात्स्त्रीलिङ्गता ।, Ct ता इति । विधेयमपेक्ष्य स्त्रीलिङ्ग निर्देश ॐ —b) Ś1 Ñ1 V2 D1–4 11 स्त्रीणां (for पत्नीनां) D3 रुचिरा —c) Ñ1 V3 D1–4 8 T1 3 G2 M1 वर्णा, Cv r m g t as in text (for वर्ण) G2 सवर्णानां M3 नानासुवर्णवर्णाना —d) D8 जज्ञिरे (for रेजिरे)

52 V1 illeg for 52 (cf v l 24) D11 om 52a (cf v l 49) —a) V3 स्वतश्च, B4 (before corr) चवतुश्च (for ववल्गुश्च) B3 चापि, G3 M2 तत्र, M1 चाह (for चात्र) B4 वसेयात्र कासाचित्, D3 ववल्गुश्चापरासाचित् —b) Ś1 D1 2 8 10 11 महार्चि(D11 °षि)षा, Ñ2 V2 B D4 [सं]यदानि च, D8 सुयोषिता, Ck t as in text (for शुभार्चिषाम्) —After 52ab, D8 ins

"59* अशुकानि च सूक्ष्माणि रेजिरे संयुतानि च।

—B3 om 52cd —c) D3 सुख (for मुख) Ś1 Ñ1 D2 3 10 11 कर्ष(D9 स्पर्श[meta])ण, Ñ2 V3 B1 2 4 D6 -कर्षेण, D1 4 कर्षेस्तु, D5 7 9 G1 Ck t -सकर्षैर्, D6 M1 सक्षोभात्, T2 -सकर्षैर्, G3 सपर्कैर्, M3 -संसर्गे (for संसर्गान्) —d) Ś1 मदं मदै, D1 8 मदमैदैर, D2 10 मदमदै, D11 गधमदै, Ct as in text (for मन्दं मन्दं) Ñ1 D7 8 च D1 तु, D5 8 T2 G2.3 M3 स (for सु) Ñ2 V3 B1 2.4 D6 मद(Ñ2 B1 °द)मदेन योषिता

53 Ñ2 V1 B D6 om 53–55 (V1 55b) (cf 5 8 I 3 7 of 274*) —a) Ś1 D10 T2 गधश्च, Ñ1 V3 D2 T1 3 G3 M3 गधी स(V3 तु) D1 8 4 -गधी च, D5 -गधिन्य, D11 गभीर, G1 V3 गधैश्च, M1 -गोधास्य, Ct as in text (for -गन्ध स) —b) Ś1 D10 शुभ, V3 सुख, D2 4 6 सुख D5 T1 3 G1 2 सुख, Ck t as in text (for सुख) —c) Ñ1 D5 श्वासा Ś1 D10 सुरभि, Ñ1 illeg (for वदन) Some MSS. निश्वास (for नि श्वास) —d) D7 4 सदा (for तदा) ॐ Ck प्रकृत्या

रावणाननशङ्काश्च काश्चिद्रावणयोषितः ।
मुखानि स्म सपत्नीनामुपाजिघ्रन्पुनः पुनः ॥ ५४
अत्यर्थं सक्तमनसो रावणे ता वरस्त्रियः ।
अस्वतन्त्राः सपत्नीनां प्रियमेवाचरंस्तदा ॥ ५५
बाहूनुपनिधायान्याः पारिहार्यविभूषिताः ।
अंशुकानि च रम्याणि प्रमदास्तत्र शिश्यिरे ॥ ५६
अन्या वक्षसि चान्यस्यास्तस्याः काचित्पुनर्भुजम् ।
अपरा त्वङ्कमन्यस्यास्तस्याश्चाप्यपरा भुजौ ॥ ५७
ऊरुपार्श्वकटीपृष्ठमन्योन्यस्य समाश्रिताः ।
परस्परनिविष्टाङ्ग्यो मदस्नेहवशानुगाः ॥ ५८
अन्योन्यस्याङ्गसंस्पर्शात्प्रीयमाणाः सुमध्यमाः ।
एकीकृतभुजाः सर्वाः सुषुपुस्तत्र योषितः ॥ ५९
अन्योन्यभुजसूत्रेण स्त्रीमाला ग्रथिता हि सा ।
मालेव ग्रथिता सूत्रे शुशुभे मत्तषट्पदा ॥ ६० G 5 13 60 B 5 9 63 L 5 9 86

सुरभिरपि । वायुरिति] शेष । मुख मुखाद्वह सुरभिगन्धो बभूव ।, Ct शर्करासव आसवविशेषस्तद्योगात्तद्गन्ध प्रकृत्या च सुरभि, अतएव सुप्तताखा वदनानि श्वासो रावण सिषेवे । यद्वा प्रकृत्यासुरभिरपि वायुरिति शेष । तासा वदनानि श्वासस्तु युक्त । अर्थो आर्धजन्तम् । अत एव शर्करासवगन्धो रावण सिषेवे ॥

54 Ñ2 V1 B D4 om 54 (cf v l 53) —ab) D10 [ब]द्रेन (sic), Ck t as in text (for -[आ]नन ). Ñ1 illeg for शङ्काश्च काश्चि Ś1 सक्ताश्च (for -शङ्काश्च) D8 रागस (for रावण) —c) Ś1 Ñ1 D1-4 10 11 मुखवात (D11 °स ), D7-9 मुखानि च, M1 मुखश्वास (for मुखानि स्म)

55 Ñ2 B D4 om 55 V1 om 55ab (cf v l 53) —a) Ś1 अत्यतासक्त, V2 रत्यर्थं सक्त D2 10 G1 अत्यर्थी सक्त (for अत्यर्थं सक्त ) —b) Ś1 Ñ1 D1 4 11 काञ्चन, V2 रावण, D9 ता वरा, Ck t as in text (for ता वर ) D2,10 रावण काञ्चन स्त्रिय, D8 तत्र काञ्चन योषित, T2 रावणेन हृता स्त्रिय —V1 illeg from 55c up to रावण in 62d —c) Ś1 Ñ1 V2 D2 10 11 सु(Ñ1 सा)स्थिरत्वात् (for अस्वतन्त्रा ) D3 4 सखिष्टाश्च सपत्नोपि —d) Ś1 Ñ1 D2,3,10 प्रीयमाणा बभु( D2 10 स्वभु )स्तदा, V2 प्रीयमाणा पुनस्तदा, D3 4 11 प्रीयमाणा बभु( D11 वभु )स्तदा

56 V1 illeg for 56 (cf v l 55) —a) Ś1 Ñ1 D10 बाहूपरि, V2 बहुरूपं, D7 9 बाहू उप (for बाहूनुप ) Ñ1 illeg. after परि up to शेप in b (see var ) M3 [अ]स्या (for [अ]न्या ) Ñ2 B D5 स्वभुजानु( B1 D6 °न्यु )पधायान्या, D3 बाहून्पविनिधायान्या, G3 बाहूनुपरि धायान्या —b) G2 परिहार्य D4 G1 M1 3 विभूषितान् (for °ता ) Ś1 Ñ1 D10 पा( D10 प )रिहारोप(Ñ1 illeg up to शेप )शोभिता, N2 V1 B D1-4 8 11 प( N2 B2 D1 पा )रिहा ( V2 B1 3 °वा )र्योपशोभिता( B D2 3 11 °ता ) D8 परिहार्य विभूषिताम्. —Ñ1 illeg after अंशुका in c up to प्रमदा in d. —c) Ś1 V2 D2 10 11 [ए]व सूक्ष्माणि, Ñ2 B D3 4 च( B2 तु ) सूक्ष्माणि, D1 6 [स]वसक्तानि (for च रम्याणि) —d) Ñ2 सुखाश्च, V2 B1-3 D6 सुषुपुस, B1(marg also) 4 प्रसुप्तास् (for प्रमदास्) Ś1 D1-4 10 शिश्यिरे, Ñ V2 B D6 योषित (B1 °ता ) D3 शेरते, D11 ससृजु (for शिश्यिरे)

57 V1 illeg for 57 (cf v l 55) —a) D2 3 8 वक्ष्यमि (sic) (for वक्षसि) V2 [अ]न्यासा (for [अ]न्यस्यास्) —Ñ2 B D6 om (hapl ) 57bc —b) D11 अन्या (for तस्या ) Ś1 D1 2 4,10 G1 3 M1 3 काश्चित् (for काचित्) G1 भुजौ (for °जम् ) Ñ1 V2 तस्याश्चान्या पुन कुचौ —c) V2 अपरा स्वेवमन्यासा —d) Ś1 Ñ2 B1 2 D1-4 8 10 कुचौ, Ñ1 V2 भुज, M1 वमौ (for भुजौ ) B3 अन्यस्या अर्पितौ कुचौ, B4 तथा चान्यपरा कुचौ, D11 अस्या चैवापरा कुचौ ॥ Cv अन्या वक्षसीत्यादि । अत्र शिश्यिरे इत्येतदेकवचनान्त सूत्वा समाप्यते । उपविधायेति च ।, so also Cr m g k t ॥

58 V1 illeg for 58 (cf v l 55) —a) Ś1 B1 D2 4 ऊरु( D2 °रू )पार्श्वं, T2 G ऊरूपार्श्वं ( T2 °र्श्वं ) (for ऊरुपार्श्व ) D8 9 -कटि (for -कटी ) D11 पृष्ठम् (for -पृष्ठम्) B2 ऊरु कटी तथा पृष्ठम् —b) Ñ2 V2 D1-4 10 11 G1 मन्यो( V2 D1 3 4 °न्या )न्यस्या Ñ2 B D6 M3 अन्योन्य समुपाश्रिता —c) Ś1 Ñ1 V2 D10 विनिविष्टाङ्गा (Ś1 °ग ) Ñ2 B1 3 D6 [अ]ल्पवितागयो, B2 [आ]कृतितागयो (sic), D3 विश्लिष्टाङ्गा, D11 निविष्टाङ्गा (for निविष्टाङ्ग्यो) B3 ता परस्परश्लेषिण्यो —d) D2 मद् (sic), D8 महत्, D11 मर्दृ (for मद ) B4 -स्वेद (for -स्नेह ) Ñ2 D6 वश गता (for -वशानुगा )

59 V1 illeg for 59 (cf v l 55) M3 om (hapl ) 59 D6 om 59ab —a) Ñ V2 B1 3 D1 4 10 11 अन्योन्यगात्र, B4 °न्यगात्र (for अन्योन्यस्याङ्ग ) V1 D3 T2 M3 सस्पर्श, D2 11 G1 -सस्पर्शा (for -सस्पर्शात्) —b) M3 ह्रियमाणा B2 सुमवृता (for सुमध्यमा ) —Ś1 om 59cd. —c) Ñ1 D3 भुजाश्च( D8 °स्तु ) ता, B1 भुजभुजा, D1 2 4 10 भुजा स्म ता D11 भुजा स्मृता (for -कृतभुजा ) —d) B4 G1 प्रसुप्तास् (for सुषुपुस् )

60 V1 illeg for 60 (cf v.l 55) —a) G1 अन्योन्य Ś1 D10 -न्यबाहू, Ñ V2 B D1-4 8 -सूत्रेणा (D3 °ण ) D11 -सुखास्ता (for सूत्रेण) —b) B1 (in also) श्री (for स्त्री ) Ś1 Ñ2 B D1-4 8,10 यथा Ñ1 V2 इव (for हि सा ). D11 धीमाला ग्रथिता यथा —c) D11 ग्रथिता Ś1

G 5 13 60 B 5 9 64 L 5 5 87 लतानां माधवे मासि फुल्लानां वायुसेवनात् ।
अन्योन्यमालाग्रथितं संसक्तकुसुमोच्चयम् ॥ ६१
व्यतिवेष्टितसुस्कन्धमन्योन्यभ्रमराकुलम् ।
आसीद्वनमिवोद्धूतं स्त्रीवनं रावणस्य तत् ॥ ६२
उचितेष्वपि सुव्यक्तं न तासां योषितां तदा ।
विवेकः शक्य आधातुं भूषणाङ्गाम्बरस्रजाम् ॥ ६३
रावणे सुखसंविष्टे ताः स्त्रियो विविधप्रभाः ।
ज्वलन्तः काञ्चना दीपाः प्रैक्षन्तानिमिषा इव ॥ ६४
राजर्षिपितृदैत्यानां गन्धर्वाणां च योषितः ।
रक्षसां चाभवन्कन्यास्तस्य कामवशं गताः ॥ ६५

D3 10 तत्र, N1 D1 3 4 6 11 M1 सूत्रै (for सूत्र) —ᵈ) G1 नेत्र (for मत्त) V1 illeg for पद्पदा

61 V1 illeg for 61 (cf v l 53) —ᵃ) B4 माता D13 T3 मासे (for मासि) —ᵇ) Ñ2 B2-3 सेवितै, D11 सेपणात् (sic), T2 सेवया (for सेवनात्) Ś1 D1 3 4 10 फुल्लानामिव योषितां, B1 D6 फुल्लाना सुख(B1[m also] वायु, D6 om)सेवित —D5 reads 61ᶜᵈ in marg —ᶜ) Ś1 D1 3 4 10 बाहु V2 वर्ण (for माला) D3 अन्योन्य मगाङ्ग्रथित —ᵈ) Ś1 D10 सपक्षौ N1 V2 D1 3 4 11 सपक्ष, B4 सयुक्त (for संसक्त) D2 [उ]पम (for [उ]च्चयम्)

62 V1 illeg up to रावण in ᵈ (cf v l 55) —ᵃ) D1 3 G1 M1 Cb अति(M1 विनि)वेष्टित D2 3 11 व्यतिवेष्टित, D7-9 Ct प्रतिवेष्टित, Cg as in text (for व्यतिवेष्टित) Ñ2 B1 D6 सुजातम्, B3 सर्वांगम् G1 3 M1 स(M1 पु)स्कन्धम् Cg k t as in text (for सुस्कन्धम्) Ś1 D10 व्यवेष्टत तथा सुखु, D2 व्यति वेष्टितसुजाते B4 व्यालतिष्ठेत सुजातम् —ᵇ) Ś1 D3 10 च(D3 न)थाश्रि, B2 समयोन्य D1 4 तेजाश्रि, M1 भासक्त (for अन्योन्य) —After 62ᵃᵇ V3 reads 5 8 33-45 —B1 reads 62ᶜ-63 in marg —ᶜ) D3 3 11 [उ]द्धूर G1 [आ]धूर (for [उ]द्धूत) —ᵈ) Ś1 Ñ1 D2 10 स्त्रीरत्न D11 स्त्री स्त्रीणां (sic) Ct as in text (for स्त्रीवन) D3 राक्षसस्य (for रावणस्य) V2 च, D2 10 तु (for तत्) —After 62 N2 V B1(m) 2 4 D6 ins

260* तासां नितान्तविश्वस्त मूर्छितानां मदेन च ।
पद्मिनीनां प्रसुप्तानां रूपमासीद्यथैव हि ।
तासामुच्छ्वासवातेन माल्यं वस्त्रं च गात्रतः ।
नात्यर्थं स्पन्दते चित्रं प्राप्य मन्दमिवानिलम् ।

[For l 3-4 cf 5 9 28 —(l 4) B3 अतीव (for नात्यर्थं) V2 कृत (for चित्र) D6 स्वानत ]

63 B1 reads 63 in marg (cf v l 62) —ᵃ) Ś1 Ñ1 V3 B2 3 अचिरेण, Ñ2 V1 B1 3(marg also) 4 D6 सुचिरेण, D1 4 उदितेन D3 10 रुचिरेण D3 उचितेन, D11 कपितेन (for उचितेषु) B3 [अ]भि (for [अ]पि) —ᵇ) B2 तथा, D4 सदा (for तदा) B1 स ताः योषित तथा —ᶜᵈ) D7 9 Ck t विवेक शक्यम् D3 मारब्धु, D3 आदातु (for आधातु) Ś1 D1 3 4 10 11 विवेकः शक्यमारब्धु, Ñ1 विवेक शक्यते कर्तुं (for ᶜ) Ś1 Ñ1 D1 3 4 भूषणास्य, D3 भूषणाग्र (for भूषणाङ्ग-) D2 3 -[अं]बरस्रज D10 भूषणान्यास्यरस्रजा (corrupt), D12 भूषिताग्र्याम्बरस्रजा (for ᵈ) Ñ2 V B D6 विवेक शक्यते कर्तुं भूषणाम्बरस्रजा (V3 B3 D6 °ज)

64 Ñ3 V1 B D6 om 64 —ᵃ) Ś1 D10 रावण Ś1 V3 D3 10 ससुख(V2 D3 °हे) Cr m g t as in text (for संविष्टे) M1 रावणेन सुखयुक्तास् —ᵇ) D12 त (for ता) G3 रुचिर (for विविध) Ś1 प्रिया (for प्रभा) D2 10 विबुधप्रिया —G3 mostly damaged for 64ᶜ —ᶜ) Ñ1 V2 D3 ज्वलिता (for ज्वलन्त) T2 दीप्ता (for दीपा) Ś1 D10 ज्वलिता काञ्चनादीप्ता, D1 4 ज्वलितै काचनैर्दीपै D11 ज्वलत काञ्चनान्दीपान् (sic) —ᵈ) Ś1 D10 M1 Cg प्रैक्षत, Ñ1 V3 D7 9 T प्रेक्षतो D1-5 प्रेक्ष्यते D3 11 Cm प्रक्षते M3 प्रैक्ष्यतस्य (for प्रैक्षन्त)

65 B1 reads 65 in marg —ᵃ) Ś1 Ñ1 D1-4 10 11 नृप, D7 9 G1 Ck t विप्र Cr as in text (for पितृ) G1 देवाना Cr k t as in text (for दैत्याना) Ñ3 V B1 3 D6 नृनागा(B1 °ग)सुरदैत्या(V2 °देवा)ना, B4 नृणामसुरदत्याना —ᵇ) D6 10 11 योषिता, Ct as in text (for °त) —ᶜ) B4 (also) राक्षसाना (hypm) (for रक्षसा च) B3 [अ]भवस्त्वो (for °भवन्कन्यास्) M3 राक्षसाना च या कन्यास् —ᵈ) D10 तत्र (for तस्य) Ś1 D10 गतास्तदा Ñ1 B1 वशास्तदा D2 मतास्तदा D3 वश तदा D11 गता इव (for वश गता) N2 V B1 3 4 D6 ता(B3 स) हि त(B4 °सित)स्य परिग्रह (V3 °हा), B2 रावणस्य परिग्रह, D4 तस्य कामवशास्तदा —After 65 Ñ2 V B1(m) 2-4 D6 ins

261* तासां चन्द्रोपमैर्वक्त्रैः शुभैर्ललितकुण्डलैः ।
व्यराजत विमानं तन्नभस्तारागणैरिव ।
नूपुरैरपविद्धैश्च वलयैश्चापि भास्वरैः ।
हारैश्च हरिणाक्षीणां प्रकीर्णैः शुशुभे मही ।

[l 1-2 = 5 8 32 —(l 1) B3 ज्वलित (for ललित) —(l 2) B3 तु (for त) V3 भूरा शाना, D6 विताने त (for विमानं त) —(l 4) B3 शुशुभाते (for शुशुभे मही) ]

while D4 7-9 S ins

262* युद्धकामेन ता सर्वा रावणेन हृता स्त्रिय ।
समदा मदनेनैव मोहिता काश्चिदागता ।

[(l 1) ※ Ct सर्वा इति बाहुप्राभिप्रायम् ※ —(l 2) T3 प्रमदा Cr t as above (for समदा) G2 3 M2 अगमा Cr g as above (for आगता) ]

न तत्र काचित्प्रमदा प्रसह्य
वीर्योपपन्नेन गुणेन लब्धा ।
न चान्यकामापि न चान्यपूर्वा
विना वरार्हां जनकात्मजां तु ॥ ६६
न चाकुलीना न च हीनरूपा
नादक्षिणा नानुपचारयुक्ता ।
भार्याभवत्तस्य न हीनसत्त्वा
न चापि कान्तस्य न कामनीया ॥ ६७

बभूव बुद्धिस्तु हरीश्वरस्य
यदीदृशी राघवधर्मपत्नी ।
इमा यथा राक्षसराजभार्याः
सुजातमस्येति हि साधुबुद्धेः ॥ ६८
पुनश्च सोऽचिन्तयदार्तरूपो
ध्रुवं विशिष्टा गुणतो हि सीता ।
अथायमस्यां कृतवान्महात्मा
लङ्केश्वरः कष्टमनार्यकर्म ॥ ६९ G. 5. 11. 72 B. 5. 9. 71 L. 5. 5. 95

इति श्रीरामायणे सुन्दरकाण्डे सप्तमः सर्गः ॥ ७ ॥

66 [a]) Ś1 Ñ V B1 D1. 7-9 G M1 Cr g k t तत्र काश्चित्, B3 तत्र कश्चित्, D11 काश्चिदत्र, Cv m, as in text (for तत्र काचित्) Ś1 Ñ V B1 D1. 7. 9 G M1 Cr g k t प्रमदा, Cv m as in text (for °दा) G3 damaged from सह up to लब्धा in [b] Ñ2 V B D6 प्रधाना (for प्रसह्य) —[b]) D7. 9 G1. 2 M1 Cr g k t लब्धा, Cv m लब्धा (as in text) Ś1 Ñ D1. 6. 10. 11 प्रधान (Ñ2 D6 °सह्य) वीर्येण धन्ये (D3. 4 हि न) न लब्धा (D6. 10. 11 °ब्धा) V B1-3 नयेन धी (B1 [marg also] धै) र्येण च (B2 ह) या न लब्धा, B4 रूपेण धैर्येण च या न लब्धा —[c]) D11 चान्यकामापि Ś1 Ñ V B D2-4. 6. 10. 11 न (V2 च) तथा (for [अ]पि न च) —[d]) T1. 2 G M3 तु, T2 च (for तु) Ś1 Ñ1 D1. 4. 10 विना वराया (D2. 4 वराका) जनकात्मजाया, Ñ2 V B D6 हीना च यस्मान्न (B1 °दन्य)-नकात्मजाया, D11 विना वराया जनकात्मजाया

67 [a]) V3 [मा]कुला वा (for [अ]कुलीना) V1 हीनसत्त्वा (for °रूपा, —[b]) V2 D11 °दक्षिणा (for [अ] °दक्षिणा) T3 च (for second न) Ñ1 B1 D3 G1 M1 -युक्ता, B3 दृप्ता (for -युक्ता) D1. 4. 11 [अ]प्युपचारयुक्ता (D1. 4 °क्ता) Ś1 D10 नदाक्षिणानैव (D10 °नात) पचारयुक्ता, B2 नादक्षिणा नोपचारयुक्ता —B3 om 67[cd] —[c]) D11 नार्यो (for भार्या) Ś1 D10 [आ]बभूव, B1 भवेद्, D2. 11 G1 M1 [अ]भवन् (for [अ]भवत्) Ñ1 हान** (illeg) B4 चारुपकामा D11 हीनसत्त्वा (for हीनसत्त्वा) —[d]) Ñ1 [अ]न्य (for [अ]पि) Ś1 Ñ1 D1-4. 10. 11 कान्तस्य, Ct as in text (for कान्तस्य) D1. 3. 11 G1 M1 कामनीया Ñ2 V1 B1. 2. 4 D6 न चान्यकामा (B1 °न्यसत्त्वा) न च (B3 °स्य न) कामहीना, V3 न चाल्पकान्त्यास्य न हीनकामा

68 [a]) Ś1 Ñ1 च हरीश्वरस्य, Ñ2 V B D2-4. 6. 10. 11 च कपी° (for तु हरी°) —[b]) Ś1 D10 येदृशी (for इ°) G3 damaged from यत्र up to साधु in [d] —[c]) D7. 9 यदा (for यथा) V2 B1. 2 -भाय (for -भार्याः) —[d]) Ś1 D2. 10 सुजातमस्या इव, Ñ V1 B1-3 D1. 3. 4. 6 सुजातमस्या इति, V2 सुजातशोभा इति, B4 सुजातमस्या इति, D11 सुजातरूपा इति (for सुजातमस्येति) Ñ2 V B1. 2. 4 D6 जातबुद्धि, B2 D1. 2. 4 T3 मातुबुद्धि, Cr m g k t as in text (for साधुबुद्धेः)

69 [ab]) Ś1 Ñ1 D1-4. 10. 11 अथार्त्य, B1 (m) D7 M1 Ck t आर्तरूपो, Cv r m g as in text (for यार्तरूपो) V2 पुनश्च वीरो हनुमान्महात्मा मुनिश्च नृत्यगुणा हि माता ✻ Cv आर्तरूप इति। पूर्वं दृष्टानुचितचिन्तावशात् तान्तां त्वमपि देवीमदृष्ट्वा योग्यत्व चिन्तयित्वा तत मनसो न कष्टम् । Cr m लङ्केश्वरोऽनार्यस्मात्कष्टमस्य कर्म कृतवान् कर्मस्या तद्रूप पुनश्चाचिन्तयत् (Cm °रूप सन्पुनश्चाचिन्तयदिति सम्बन्ध)। Cg आर्तरूपोऽप्यनन्तरमात्। प्रशंसाया... पुनश्चाचिन्तयत्। Ck आर्तरूप इति पाठः। ... इमं संशयं निश्चेष्यति। "न रामेण वियुक्ता सा स्वप्तुमर्हति भामिनी" इत्यादिना। "यद्वा महत्सत्त्वस्य ... पश्चिमा ... इत्यादि यदुक्तमन्यमन्यमभूत्। तथापि इति पश्चात्तापयुक्त इत्याह। ... इति पाठे ... Ct आर्तरूप ... भवति तथा कृतवान्। । "आर्तरूप इति पाठे ... इत्यर्थः ⁊P —V2 om 69[cd] —[c]) Ś1 Ñ1 B1. 4 D1 अथायमस्या, Ñ2 V1 B2 D2. 3. 4. 10 अथाय यस्या, B3 नो चैकश्च वा, D3 अथै च यस्या D11 यथायमस्या, M1 ** यमस्या (damaged) (for अथायमस्यां) —[d]) D11 लङ्केश्वर Ś1 Ñ V1 B1-3 D1. 4. 10. 11 कष्टं (D11 ना) धर्मेवत् (for मनार्यकर्म) B4 लङ्केश्वर स्वयमनार्यमेतत्, D10 लङ्केश्वर श्रेष्ठ न कार्यमेतत् (sic)

Colophon B1 reads in marg —*Sarga name* Ś1 B1 D11 रावणगृहोद्यान (D11 °ला***) दर्शन, Ñ2 अन्तःपुरमध्ये अन्तःपुरसप्तन, Ñ2 V1 B1 D1. 3. 11 अन्तरोध दर्शन (D3. 4 °न), V2 अन्तःपुरवर्णन, B3 श्रीमदर्शन, B4 अन्तःपुरदर्शन, D1. 4 अन्तरोधवर्णन, D2 अन्तःपुरविचयो रावणान्तरोधवर्णन —*Sarga no* (figures words or both) Ñ1 D1-4. 10. 11 om Ś1 6, Ñ2 V1 B1. 2. 4 D6 14, V2 4, B3 12, D6 7-9 S 9 —After colophon, D3 concludes with रामः G with श्रीरामाय नमः

लोहितेनानुलिप्ताङ्गं चन्दनेन सुगन्धिना ।
संध्यारक्तमिवाकाशे तोयदं सतडिद्गुणम् ॥ ६

वृतमाभरणैर्दिव्यैः सुरूपं कामरूपिणम् ।
सवृक्षवनगुल्माढ्यं प्रसुप्तमिव मन्दरम् ॥ ७

क्रीडित्वोपरतं रात्रौ वराभरणभूषितम् ।
प्रियं राक्षसकन्यानां राक्षसानां सुखावहम् ॥ ८

पीत्वाप्युपरतं चापि ददर्श स महाकपिः ।
भास्वरे शयने वीरं प्रसुप्तं राक्षसाधिपम् ॥ ९

निःश्वसन्तं यथा नागं रावणं वानरोत्तमः ।
आसाद्य परमोद्विग्नः सोऽपासर्पत्सुभीतवत् ॥ १०

अथारोहणमासाद्य वेदिकान्तरमाश्रितः ।
सुप्तं राक्षसशार्दूलं प्रेक्षते स महाकपिः ॥ ११

शुशुभे राक्षसेन्द्रस्य स्वपतः शयनोत्तमम् ।
गन्धहस्तिनि संविष्टे यथा प्रस्रवणं महत् ॥ १२

काञ्चनाङ्गदनद्धौ च ददर्श स महात्मनः ।
विक्षिप्तौ राक्षसेन्द्रस्य भुजाविन्द्रध्वजोपमौ ॥ १३ G. 5 24 15 B. 5 20 15 L. 5. 5 108

प्रदीप्त ) D7 -[उ]ज्ज्वल, D10 तु स (for [उ]त्तम ), V1 तप्तकांचनकुंडले, D5 प्रदीप्तमप्रकुंडल (sic) —c) D6 लोहिताक्ष (for °ताम्र ) G1 रार्त (for बाहु) —d) D7 राजत, D10 Cvp gp रजत (for -रजत ) Ñ1 भूषित B3 सन्निभ (for -यासम्) B3 वह्निशुद्धांशुकावृत

6 a) Ñ1 illeg from न in लिप्ताङ्ग up to b —b) B3 सुशोभित (for सुगन्धिना) —c) B2 रक्तसंध्याम् (by transp ) (for संध्यारक्तम्) B1(also m ) 4 [आ]काश (for °शे ) —d) V1 प्रभ, B2 (sup lin also) घन, B3 T1 2 M3 -वर्ण, D5 गूह (for गुणम्)

7 a) D3 5 धृतस्य (for धृतम्) B2 आ 3 रणैर् (for आभ°) Ñ V B D3 6 M1 मुख्यै (for दिव्यै ) —b) Ś1 D1 3 4 10 11 सुदृष्ट, D5 4 स्वरूप (for सुरूप) B2 (also in marg ) -चारिण (for -रूपिणम्) —c) D1 4 11 सु, Cv r m g t as in text (for स ) B3 गण, D1 4 -वट, D11 वल (for वन ) B1 गजाढ्य (for गुल्माढ्य) —d) B2(sup lin also, unmetrical) मन्दर, B3 मदिर, D2 11 अंबर (with hiatus) (for मन्दरम्)

8 a) Ś1 D1-4 10 क्रीडनाद्विरत रात्रौ, Ñ1 क्रीडित्वो द्विरत रात्रौ, Ñ2 V B D3 11 क्रीडित्वा(V3 D11 °ताद्) विरत रात्रौ, D5 क्रीडितोपरत रात्रौ —b) B1 नाना (for वर ) B3 विविधस्त्रीगुणैर्युत —After 8ab Ñ2 V2 B3 D5 repeat 3cd (followed by 265*) B3 reads while D11 ins 265* —c) D6 प्रिय (for प्रियं) Ś1 Ñ V B D1-4 6 10 11 नैर्ऋत (for राक्षस ) D5 कल्याना (for -कन्याना) —d) Ñ1 illeg, B1 2 4 राक्षसीना, G3 रक्षस्य च, M1 सतत च (for राक्षसाना ) G2 शुभावह

9 Ñ1 illeg for 9a —a) D5 हि (for first [अ]पि) Ś1 V2 D2 10 पानादुपरत चैव(V2 तत्र), Ñ2 V1 B2-4 D6 पीत्वा च विरत तत्र, B1 पीत्वा मधूनि विरत D1 3 4 11 पाना दुप(D5 °पा)रत चा(D4 वा)पि —b) V3 D1 4 11 स ददर्श (by transp ) B1 त ददर्श (for ददर्श स ) Ñ1 ददर्श हरि यूथप —c) D10 भासुरे (for भास्वरे) B1 धीर ( for वीर) D5 भास्वरे शयनेर्वीरै —d) Ñ2 D6 शयानं, D5 प्रसुप्त (for प्रसुप्त) Ñ1 D1 4 11 G3 राक्षसेश्वर, B3 रावणी वरी (for राक्षसाधिपम्) —After 9 Ñ2 V B D6 read 5 9 6-7 while D11 ins

266* दिव्यचन्दनगात्राङ्गो राक्षसेन्द्र महायशम् ।

10 T1 2 om 10ab —a) V1 2 D1 3 10 11 T3 G M निश्वसत B1 महा (for यथा) —d) M1 राक्षसोत्तम M2 वानरर्षभ (for वानरोत्तम ) B3 त तदा कपिसत्तम —After 10ab B2 ins

267* दृष्ट्वा त च महावीर मेघाकार सुदुर्जयम् ।

—b) Ś1 Ñ1 D2 10 सोप( Ñ1 D10 °पा )सर्प्य V2 B1 D3 6 11 G1 3 M1 सोपसर्पत् (for सोऽपासर्पत्) Ś1 Ñ1 D1 2 4 10 11 विनीतवत्, Ñ2 V1 B2.4 D6 अशङ्कितत, V2 समीपत, B1 अपेतश्री, D2 विसीतवत्, D5 सभी° (for सुभीतवत्) B3 परमं विस्मय गत

11 Ñ2 V1 B D6 transp 11 and 12 —a) B3 तथा D6 यथा (for अथ) —b) D11 [उ]त्तरम् (for [अ]न्तरम्) B3 समाश्रित, D5 11 M2 माश्रित (for आश्रित ) Ñ2 D6 वेदिकान्तरसश्रित V1 वेदिकान्त समाहित, —c) B1 तत्रो, D7 9 क्षीर (for सुप्त ) D5 6 T1 2 शायान (for शार्दूल ) —d) V1 B1 2 4 D6 ई(B1 2 धी)क्षाचक्रे, B3 ईक्षते च D3 5 प्रेक्ष्यते स्म (for प्रेक्षते स्म) D11 सदा (for महा )

12 Ñ2 V1 B D6 transp 11 and 12 —a) Ñ2 V1 B2 4 D6 बभौ हि( B2 च ), B1 2 सबभौ (for शुशुभे) —D1 4 om (hapl ) 12b–13a —b) V2 प्रसुप्त (sic) T2 स्फाटिक ( for स्वपत ) D7 9 शयन शुभ (for °नोत्तमम्) —c) D5 -हस्तेन (for हस्तिनि), Ñ2 V D7 9 सनिह (for °ष्टे ) —d) D2.3 5 11 प्रस्रवण Ñ2 V1 B D6 यथा प्रस्रवणो गिरि

13 D1 4 om 13abc (cf. v l 12) —a) Ś1 D2 10 -बद्धौ च, Ñ V2 B D6 नद्धा(B1 orig °द्धा [sic])श्च, V3 D7 9 Ct संनद्धौ(V3 °द्धान्), G3 मद्धेन (for -नद्धौ च) —b) V B D6 [म ]हा, D6 T1 3 M1 सु (for स) Ñ1 महाहरि Ñ2 D5 11 M1(also inf lin pr m as in text) °कपि (for °त्मन ) —c) Ñ2 V B D6 वि

# ८

G 5 14 1 B 5 10 1 L 5 5 96

तत्र दिव्योपमं मुख्यं स्फाटिकं रत्नभूषितम् ।
अवेक्षमाणो हनुमान्ददर्श शयनासनम् ॥ १
तस्य चैकतमे देशे सोऽग्र्यमाल्यविभूषितम् ।
ददर्श पाण्डुरं छत्रं ताराधिपतिसंनिभम् ॥ २
बालव्यजनहस्ताभिर्वीज्यमानं समन्ततः ।
गन्धैश्च विविधैर्जुष्टं वरधूपेन धूपितम् ॥ ३
परमास्तरणास्तीर्णमाविकाजिनसंवृतम् ।
दामभिर्वरमाल्यानां समन्तादुपशोभितम् ॥ ४
तस्मिञ्जीमूतसंकाशं प्रदीप्तोत्तमकुण्डलम् ।
लोहिताक्षं महाबाहुं महारजतवाससम् ॥ ५

8

M1 2 begin with श्रीरामाय नम

1 $^{a}$) D1 4 ततो, T2 तत्तु (for तत्र) Ś1 Ñ1 D1-4 10 11 शुभ्र, D8 M1 रम्य (for मुख्य) Ñ2 V B D6 सथ (B1 [in marg ]) दिव्योप(Ñ2 °च )म तत्र —$^{b}$) B1 हेम, D3 रक्त (for रत्न) Ñ1 V1 -शोभित (for भूषितम्) —After $1^{ab}$, G2 reads $2^{cd}$ for the first time here, repeating it in its proper place —D11 om (hapl ) $1^{c}$-$2^{b}$ —$^{c}$) Ś1 D1-6 7 9 अ(D3 म )वेक्षमाणो, Ñ2 V1 B D6 निरीक्ष्य(B2 4 °क्ष )° D8 समावेक्ष°, Cm t as in text (for अवेक्ष°) —$^{d}$) Ś1 Ñ V B (B1 [in marg ]) D1 2 4 6 10 प(B2 व )रमासन, D8 पवनात्मज, Ct as in text (for शयनासनम्) —After 1 Ś1 Ñ1 D1 2 4 10 read $3^{cd}$ Ñ2 V1 B2-4 D6 read $4^{ab}$, V2 reads for the first time $3^{cd}$ repeating it after $8^{ab}$ while D5 7 9 S ins

263* दान्तकाञ्चनचित्राङ्गैर्वैदूर्यैश्च वरासनैः ।
महासस्तरणोपेतैरुपपन्नं महाधनैः ।

[(l 1) D9 चित्राग (for °ङ्गैः) D3 G3 वैदूर्यैः Cm g t as in text (for वैदूर्यैश्च) —M1 damaged from नै in वरासनै up to first महा in l 2 —(l 2) D5 7 9 G1 M2 Ct [म]हा(D5 om हा )स्तरण (for सस्तरण) ]
—Thereafter D5 G1 3 M1 cont 264*

2 D11 om $2^{ab}$ (cf v l 1) D8 om $2^{ab}$ —$^{a}$) D1 4 तत्र (for तस्य) G3 lacuna from मे up to सो in $^{b}$ —$^{b}$) Ś1 Ñ1 D10 M1 3 सो(M1 सा )ग्र्यमाला, Ñ2 V B1 2 4 D6 नानारत्न, D2 3 साग्रमाल्य, D7 9 दिव्य माल्य G1 सोग्र° (for सोऽग्र्यमाल्य) D7 9 M2 [उ]प शोभित (for विभूषितम्) —After $2^{ab}$ T2 reads 4 G2 repeats $2^{cd}$ here (cf v l 1) —$^{c}$) D1 11 पाडुर, T1 M पाडर (for पाण्डुर) —$^{d}$) D3 राका (for तारा) V2 -वर्धम (for संनिभम्) B2 तारापतिसमन्वित ॐ Cv उपपन्नं महाधनैरित्यत पर "तस्य चैकतमे" इत्यादिश्लोक । अत्र पर जातरूपमित्यादि । व्यत्यासस्तु लेखकप्रमादकृत । Cr तस्येति । तस्य चैकतमे देश इति श्लोक एतस्मादनन्तर केषु चित्कोशेषु लेखकप्रमादकृत ॐ —After 2, Ś1 D1 3 4 10 read 4 D6 7 9 T2 G2 M1 3 ins while T1 3 ins after $3^{ab}$ whereas D5 G1 3 M1 cont after 263*

264* जातरूपपरिक्षिप्तं चित्रभानोः समप्रभम् ।
अशोकमालाविततं ददर्श परमासनम् ।

[(l 1) D3 T1 3 M1 3 चित्रभानु (for °नो ) —(l 2) D3 अशोकमाल्यावनत (for the prior half) D3 शयन महत्, G3 कपिरासन Cv g k t as above (for परमासनम्) ]

3 D3 reads $3^{ab}$ after 4 Ñ1 illeg from बा in $^{a}$ up to भा in $^{b}$ —For $3^{ab}$ Ñ2 V2 B1 D6 subst. and read after $3^{cd}$ (r ), V1 B2 subst and read after $3^{cd}$, B3 subst and reads after $8^{ab}$ D11 ins after $8^{ab}$

265* वीज्यमानं वरस्त्रीभिर्बालव्यजनपाणिभिः ।

[ Ñ2 V1 B3 वीक्ष्यमाण (for वीज्यमान) D11 वरस्त्रीणा (for °भिर्) ]
—After $3^{ab}$, T1 3 ins 264* D11 om $3^{cd}$ Ś1 Ñ1 D1 2 4 10 read $3^{cd}$ after 1 Ñ2 B1 D6 read $3^{cd}$ (first time) after $4^{ab}$ while V2 reads $3^{cd}$ (first time) after 1 and all repeat $3^{cd}$ after $8^{ab}$ —$^{c}$) Ś1 Ñ1 B4 (second time) D3 10 भक्तिभिर् (for गन्धैश्च) V2 (second time) बहुभिर्, M1 damaged (for विविधैर्) V2 (first time) चित्र, B4 (second time) जुष्टैर्, D1 4 युक्त (for जुष्ट) —$^{d}$) Ñ2 (first time) V2 (second time) B1 D6 (second time) वरधूपाद्य, V1 °पोप, B3 °पाभि, G1 °पैश्च (for °पेन) B2 वरधूपोपशोभित

4 V2 om $4^{ab}$ Ś1 D1 2 4 10 read 4 after 2 Ñ2 V1 B2-4 D6 read $4^{ab}$ after 1 T2 reads 4 after $2^{ab}$ —$^{a}$) Ś1 D3 10 परमास्तरण चैव, B3 परमास्तरणाकीर्ण D3 बालव्यजनक चैव G2 महासस्तरणास्तीर्णम् —$^{b}$) Ś1 Ñ D1 3 4 10 राङ्कव, D2 वरात्व (sic) Cv m g k t as in text (for आविक) Ñ1 वासस, B2 सस्तृत (for -संवृतम्) D11 मासिवेश कपिगृह —After $4^{ab}$ Ñ2 B1 D6 read $3^{cd}$ for the first time —$^{c}$) D11 रामाभिर् (sic) (for दामभिर्) G2 वन (for वर) B2 -मालाना (for माल्याना) M1 दाम सर्वरमाल्याना (sic) —After 4, D6 reads $3^{ab}$

5 $^{a}$) Ñ2 V B D6 ततो, G1 तस्य, M1 तीक्ष्ण (for तस्मिन्) —$^{b}$) Ś1 Ñ1 B D1-4 11 प्रतप्त, D10 °प्त (for

# १९

G 5 23 1
B 5 21 1
L 5 16 1

तस्य तद्वचनं श्रुत्वा सीता रौद्रस्य रक्षसः ।
आर्ता दीनस्वरा दीनं प्रत्युवाच शनैर्वचः ॥ १
दुःखार्ता रुदती सीता वेपमाना तपस्विनी ।
चिन्तयन्ती वरारोहा पतिमेव पतिव्रता ॥ २
तृणमन्तरतः कृत्वा प्रत्युवाच शुचिस्मिता ।
निवर्तय मनो मत्तः स्वजने क्रियतां मनः ॥ ३
न मां प्रार्थयितुं युक्तस्त्वं सिद्धिमिव पापकृत् ।
अकार्यं न मया कार्यमेकपत्न्या विगर्हितम् ।
कुलं संप्राप्तया पुण्यं कुले महति जातया ॥ ४
एवमुक्त्वा तु वैदेही रावणं तं यशस्विनी ।
राक्षसं पृष्ठतः कृत्वा भूयो वचनमब्रवीत् ॥ ५
नाहमौपयिकी भार्या परभार्या सती तव ।
साधु धर्ममवेक्षस्व साधु साधुव्रतं चर ॥ ६
यथा तव तथान्येषां रक्ष्या दारा निशाचर ।
आत्मानमुपमां कृत्वा स्वेषु दारेषु रम्यताम् ॥ ७
अतुष्टं स्वेषु दारेषु चपलं चलितेन्द्रियम् ।
नयन्ति निकृतिप्रज्ञं परदाराः पराभवम् ॥ ८

## 19

V1 illeg for Sarga 19 (cf v l 5 11 29) M2 begins with श्रीरामाय नम

1 $^{a}$) Ñ1 B1 2 [ए]तद् (for तद्) —$^{b}$) D1-4 11 तदा (for सीता) —$^{c}$) T3 आत D2 11 हीन (for दीन) Ś1 Ñ V2 B D1-4 6 8 10 11 G1 दीना Cm t as in text (for दीन) —$^{d}$) Ñ2 V3 B D5-9 G M1 तत शनै M2 शनै शनै (for शनैर्वच) Ś1 Ñ1 D1 4 10 11 शनै रुदितलोचना —After 1 Ś1 B1 D1-4 10 11 ins 497* while Ñ1 (slightly illeg) ins

496* भृशं वा करुय ** दुःखिता कदली यथा ।
समीक्ष्य हरण त च महाभूतभयंकरम् ।

—Thereafter Ñ1 cont 497*

2 B1 2 om 2-4$^{b}$ —$^{a}$) Ś1 सा प्ररुदती Ñ1 स * रुदती B4 सप्रमुदिता D1-4 11 सप्ररु[D2 °नु]दिता (for रुदती सीता) D10 दु खार्ता सप्ररुतीर्वं (corrupt) —$^{b}$) N1 सुदु खिता, D2 8 11 मनस्विनी, D10 यश° (for तपस्विनी) —$^{c}$) Ś1 D2 10 11 त(D2 11 सा) चिंतयित्वा वैदेही, N1 D3 सा चिंत्य राम वैदेही, D1 4 संचिंतयती वैदेही —For 2-4$^{b}$, Ñ2 V1 B3 D1 subst 497*

3 B1 2 om 3 (cf v l 2) Ñ1 om 3$^{ab}$ For subst in Ñ2 V3 B3 D1 cf v l 2 and 4 —$^{a}$) B4 तृणवञ्च तत कृत्वा —$^{b}$) G1 तत शनै (for शुचिस्मिता) ※ Cr m g प्रत्युवाचेति पुनरभिधान वचनप्रकारविशेषकथनार्थम् । दु खार्ताया अपि शुचिस्मितत्वाभिधान वस्तुस्वभावेन स्मितवत्प्रतीयमानत्वात् (Cm °नार्थम् । शुचिस्मितेति । वस्तुत स्वभाववर्णनम्) ।, Ct कुद्धोक्त्या मन पदादे पौनरुक्त्य न दोषमा ह । वर्णनीयभयीभावाश्च (?) कवेरपि तादृश न दोषाय ※ —$^{c}$) G2 निवर्तस्व —$^{d}$) D7 1 G3 M1 2 Ck t क्रीयतां, G1 ध्रियता (for क्रियता) D8 हि जन् (for मन )

4 B1 3 om 4$^{ab}$ (cf v l 2) —$^{a}$) B4 D1-3 11 प्रापयितु (for प्रार्थ°) B4 D1-8 11 शक्तस् (for युक्तस्) D10 न च मा प्रापितु शक्तस् —$^{b}$) T1 3 M3 सु (for स्व) —For 2-4$^{b}$, Ñ2 V3 B3 D4 subst while Ś1 B1 D1-4 10 11 ins after 1 Ñ1 cont after 496*

497* रावण राक्षसश्रेष्ठ कोपपर्याकुलेक्षणा ।

[Ñ1 स्पृष्टेनृप रावण त (for the prior half) D3 [आ]कुलेक्षण ]

—$^{d}$) N2 V3 B D6 साधु (for युक्त) —Ś1 D10 om 4$^{ef}$ —$^{e}$) V3 B2 1 कुले, D4 गुण (for कुल) V2 B2-4 पुण्ये (for पुण्य)

5 $^{b}$) Ś1 D10 तं मनस्विनी, Ñ2 D6 राक्षसेश्वर, D2 4 11 त तपस्विनी, G1 त यशस्विन (for त यशस्विनी) V2 B राक्षसेंद्र तपस्विनी —$^{c}$) N V2 B D6 1 रावण (for राक्षस) —$^{d}$) D1 3 4 11 रावणम् (for वचनम्) Ñ2 V2 B D1 भूयोप्या(V2 B1 2 °यो प्रा)ह शुभानना

6 Ś1 D10 om 6$^{cd}$ —$^{a}$) D2 11 औपायिकी (for औपयिकी) —$^{b}$) D8 reads परभार्या in marg —$^{c}$) B3 निरीक्षस्व (for अवेक्षस्व) —$^{d}$) D6 साधो, G1 त्व च (for साधु) V3 शव (sic) (for चर) Ś1 साधुधर्मं समाचर, T1 साधुवृत्त च रावण

7 $^{b}$) Ñ2 V3 B D3 4 T1 2 M1 2 transp रक्ष्या and दारा Ś1 (before corr ) निशाचरे, Ñ2 V3 B D6 न सशय (for निशाचर) —$^{c}$) Ś1 D10 उत्तम (for उपमा) —$^{d}$) D5 reads दारेषु in marg N1 (with hiatus) श्च प्रभार्यासु, Ck स्वदारेष्वेव (for स्वेषु दारेषु) Ś1 रम्यता (for रम्यताम्)

8 $^{a}$) Ś1 D10 G1 अनिष्ट, D1 4 असृष्टं, Cr m g t as in text (for अतुष्ट) N2 V1 B D3 4 असतुष्ट स्वदारेषु —$^{b}$) D8 चलितं (for चपलं) Ś1 N B3 D1-4 6 7 8-11 चपल T2 चचल (for चलित) —$^{c}$) Ś1 D1 11 नियर्त

इह सन्तो न वा सन्ति सतो वा नानुवर्तसे ।
वचो मिथ्याप्रणीतात्मा पथ्यमुक्तं विचक्षणैः ॥ ९
अकृतात्मानमासाद्य राजानमनये रतम् ।
समृद्धानि विनश्यन्ति राष्ट्राणि नगराणि च ॥ १०
तथेयं त्वां समासाद्य लङ्का रत्नौघसंकुला ।
अपराधात्तवैकस्य नचिराद्विनशिष्यति ॥ ११
स्वकृतैर्हन्यमानस्य रावणादीर्घदर्शिनः ।
अभिनन्दन्ति भूतानि विनाशे पापकर्मणः ॥ १२
एवं त्वां पापकर्माणं वक्ष्यन्ति निकृता जनाः ।
दिष्ट्यैतद्व्यसनं प्राप्तो रौद्र इत्येव हर्षिताः ॥ १३
शक्या लोभयितुं नाहमैश्वर्येण धनेन वा ।
अनन्या राघवेणाहं भास्करेण प्रभा यथा ॥ १४  G 5 23 12 B 5 21 15 L 5 16 15

---

(for नयन्ति) Ś1 D3 10 निष्कृति, B1 T3 G1 निकृत, D5 प्रकृति, D11 T2 निकृति, Cr m g k t as in text (for निकृति) D11 T2 प्राज्ञ (for प्रज्ञ) —d) D5 10 द्वार (for द्वारा)

9 a) Ñ2 इहस्थ (for इह) Ś1 (m also as in text) सत्तो (for सन्तो) Ñ2 D6 न भवन्ति (for न वा सन्ति) —b) Ś1 Ñ1 D1 4 10 11 सद्भिर्, B4 सति (for सतो) Ś1 D3 10 11 नानुवर्त्य(D11 °वर्त्य)ते, B1 2 नानु(B2 °वि)वर्तसे D5 नानुवर्तसे, Cr m g k t as in text (for नानुवर्तसे) Ñ2 D6 यथा त्वमनुवर्तसे —After $9^{ab}$, D2 5 7 9 S ins

498* तथा हि विपरीता ते बुद्धिराचारवर्जिता ।

[D7 9 T2 G2 Ck t यथा Cr m g as above (for तथा)]

—c) Ś1 Ñ1 D1 4 10 11 प्रणीत(D11 °य) ते, Ct as in text (for प्रणीतात्मा) Ñ2 V2 B D6 न च(B–4 वा) धर्मप्रणीत ते —d) B2 (m) तथ्यमुक्त D11 यथामुक्त (sic) M3 पथ्ययुक्त (for पथ्यमु°) —After 9 D5 7-9 S ins

499* राक्षसानामभावाय त्वं वा न प्रतिपद्यसे ।

—Thereafter G1 reads 12

10 Ñ2 V2 B transp 10 and 11 —a) T2 अयथा, Cm k t as in text (for अकृत) —D6 om (hapl) $10^{b}$–$11^{a}$ —b) Ñ2 V2 B भर्तारम् (for राजानम्) Ñ2 V1 B D2–4 स्थित D11 पर (for रतम्) —c) Ñ2 B सुसमृद्ध V2 सुसमृद्धा (for समृद्धानि) Ś1 D1 4 10 [अ]पि नश्यन्ति, V2 B2 4 विनश्यन्ति, D2 [अ]पि पश्यन्ति (sic) (for विनश्यन्ति) —d) Ñ2 V2 B दुर्गाश्च (for राष्ट्राणि) D1–3 11 च पुराणि, D4 om (hapl) T1 2 विविधानि (for नगराणि) —After 10 V2 B1 (m) 3 4 ins while Ñ2 B2 ins after 11 (1), D6 ins after 11

500* मिथ्यावृत्त समासाद्य नाथ रक्षोगणाधिपम् ।
धनधान्यसमाकीर्णा रक्षोगणसमावृता ।

[(l 1) B4 मिथ्या (for मिथ्या) —(l 2) B2 रत्नौघ विनश्यति (for the post half)]

11 D6 om $11^{a}$ (cf v l 10) Ñ2 V2 B transp 10 and 11 Ñ2 B2 repeat 11 after 10 (transp) —a) Ś1 Ñ1 D1–4 10 यथेयं D7 9 T G1 2 तथैव (for तथेयं) Ñ2 (first time) V2 B1 2 (first time) 3 4 अकृतात्मानमासाद्य —b) Ñ2 (both times) V2 (m also) B2 (first time) 3 4 D6 –समृता (for –संकुला) —d) D1 शाचिराद्, G3 (with hiatus) अचिराद् (for नचिराद्) Ñ2 (both times) V2 B2 (both times) 3 4 D6 न चिरेण विनश्य(B1 °नश्य)ति —After 11 Ñ2 B1 D6 (Ñ2 B2 after 11 1) ins 500*

12 G2 reads 12 after 499* —a) Ś1 स्वकृत, Ñ2 B1–3 D6 स्वदोषैर्, B1 D10 सुकृतैर्, Cm k t as in text (for स्वकृतैर्) V2 वध्यमानस्य, B2 हन्यमानाश्च (for हन्यमानस्य) —b) Ś1 Ñ1 B1 D1–4 10 11 नरस्य (for रावण) B2 जीविन (for दर्शिन) ¶ Cv g राक्षसा, Cg °वणा )श्रेदर्शिन इत्यत्र राक्षसे(Cg °वणे)ति सद्बुद्धि 1, Cr रावणादीर्घदर्शिन इति पाठ 1, Cm रावणेति सम्बोधनम् ¶ —D6 reads $12^{c}$–$13^{b}$ in marg —c) D1 नंदति, Ct as in text (for नन्दन्ति) —d) Ś1 Ñ1 V2 B D2–4 6 10 11 विनाश, D1 निवाश (sic), Ck t as in text (for विनाशे) Ś1 कर्मिण, B3 धर्मिण (for –कर्मण)

13 D6 reads $13^{ab}$ in marg (cf v l 12) —a) Ñ1 त्वामेव (by transp) (for एव त्वा) —b) Ś1 B2 4 D1 11 T1 G1 निकृत, Ñ2 D6 विबुधा, D2 4 निकृति, Ck t as in text (for निकृता) D3 द्विजा Ck t as in text (for जना) M2 निकृतात्मन —c) Ś1 D1 3 10 दिष्ट्यैव, Ñ B3 4 D6 दिष्ट्याय, V2 B1 दुष्टाश्च, D2 11 दिष्ट्यैव(D11 °व) (for दिष्ट्यैतद्) Ñ2 D11 निकृति(D11 °त) (for व्यसन) —d) Ñ V2 B D6 रौद्रकर्मेति V2 D11 कर्षिता, B3 मर्हित (sic) D2 मर्षिता, G2 भाषिता (for हर्षिता)

14 a) Ś1 Ñ V2 B D1–4 5 10 11 transp शक्या and नाहम् —b) Ś1 D10 स्वैश्वर्येण, D4 वै° (for ऐश्वर्येण) B2 बलेन (for धनेन) Ñ2 D6 च (for वा) —c) Ś1 D10 अंगना (for अनन्या) Ś1 Ñ V2 B D1–4 6 10 11 राघवस्य (for °वेण) D3 [अ]श (for [अ]हं) —d) Ś1 Ñ V2 B D1–4 6 10 11 भास्करस्य V2 B3 D5 7 9 यथा प्रभा (by transp) (for प्रभा यथा) —After 14 Ś1 Ñ V2 B D1–4 6 10 11 ins

501* तस्याहं लोकनाथस्य रामस्य विदितात्मन ।

G. 5 23 13
B 5 21 16
L 5 16 16

उपधाय भुजं तस्य लोकनाथस्य सत्कृतम् ।
कथं नामोपधास्यामि भुजमन्यस्य कस्यचित् ॥ १५
अहमौपयिकी भार्या तस्यैव वसुधापतेः ।
व्रतस्नातस्य विप्रस्य विद्येव विदितात्मनः ॥ १६
साधु रावण रामेण मां समानय दुःखिताम् ।
वने वाशितया सार्धं करेण्वेव गजाधिपम् ॥ १७
मित्रमौपयिकं कर्तुं रामः स्थानं परीप्सता ।
वधं चानिच्छता घोरं त्वयासौ पुरुषर्षभः ॥ १८
वर्जयेद्वज्रमुत्सृष्टं वर्जयेदन्तकश्चिरम् ।
त्वद्विधं न तु संक्रुद्धो लोकनाथः स राघवः ॥ १९
रामस्य धनुषः शब्दं श्रोष्यसि त्वं महास्वनम् ।
शतक्रतुविसृष्टस्य निर्घोषमशनेरिव ॥ २०

---

15 a) Ś1 N2 V2 B2 3 D2 4 6 1 11 सत्य D3 दिव्य (for सत्कृत) —b) Ś1 Ñ1 B4 D2 3 10 11 चन्द्रनागु( D3 °ग )रु, B3 3 D5 लोककान्तस्य (for लोकनाथस्य) D3 सत्कृत G1 स कृत (sic) —c) M3 [उ]पयास्यामि (for [उ]पधा°)

16 a) D3 11 औपासिकी —b) Ñ1 वसुधानुज, Ñ2 V2 B1-3 D6 सु( B2 हि )महात्मन D3 विदितात्मन, D7 9 च धरापते, D11 वसुधाधिपे (sic) (for वसुधापते) —c) M1 व्रत स्नातस्य, M2 V2 B D6 स्नात( B3 °न ) व्रतस्य, D11 व्रतस्थितस्य (for व्रतस्नातस्य) D5 T2 G1 2 M1 2 Cg tp धीरस्य D7 1 Ct विप्रेव, G3 वीरस्य Ch as in text (for विप्रस्य) —d) D7 9 Ct विप्रस्य, Cg as in text (for विद्येव) ॐ Ct अन्ये तु विप्रपदं त्रैवर्णिकपरम्। त्रैवर्णिकस्यैव ब्रह्मविद्यायामधिकार । अतएव 'धीरस्य' इति क्वचित्पाठ इत्याहु ॐ

17 b) Ś1 D3 10 समानीय D1 °दाय Cm g k t as in text (for °नय) B4 D4 दु खित (sic) (for °ताम्) —c) D3 वन D11 रणे (for वने) Ś1 N V2 B D2 3 5 6 8 11 T2 3 G1 वासितया, D4 वासितया (for वाशितया) Ś1 N2 V2 B1 3 D2 3 6 10 11 मत्त Ñ1 B4 D1 4 मित्य, Cm k t as in text (for सार्धं) —d) Ś1 D1 3 4 10 M1 करिण्येव, Cg k t as in text (for करेण्वेव) D3 महागज (for गजाधिपम्) N2 V2 B1-3 D6 करेण्वा यूथप यथा ॐ Cv r करेणुर्गजवधू । सैव युवतिर्वाशिता ।, Cm वने वासिता वन्द्या करेणु गजाधिपेन सार्धमिति विभक्तिविपरिणामेन योज्यम् । अन्यथा विरोधात् ।, Cg वाशितया यौवन गतया । "वाशिता युवति प्रोक्ता कलभ करिपोतक" इति वचनात् । यद्वा वासितयेति पाठ । वने वासितया वद्धया । अत्र विभक्तिव्यत्यास कार्य । वने वासिता करेणु गजाधिपेनेवेति । वस्तुतस्तु यथान्यास एवान्वयेति ।, Ch वने वासितयेति पाठ । वाशिता करेणुस्तया सार्धं क्रीडार्हं गजाधिप करेण्वेव समानय । Ct वने वासितया कामुकया करेण्वा सार्धं गजाधिपमिव । उपमानोपमेयवाक्ययो वैषम्य तु क्रुद्धविरहिण्युक्तित्वान्न दोषावहम् । करेणु गजाधिपेनेति अवतुमुचितम् ॐ

18 a) B2 D1 11 औपायिक Ñ1 D1 मन्ये (for कर्तुं) —b) D5 परीप्सया (for परीप्सता) Ś1 N2 V2 B1-3 D2 3 4 6 10 11 राघव( D11 °वो ) रावण त्वया, Ñ1 त्वया रामेण रावण, B4 रामेण रावण त्वया, D3 राघवो रावणस्य च ॐ Cg मित्रशब्दापेक्षया औपयिकमिति नपुसकनिर्देश ॐ —c) B3 मल, D7 वध (for वध) D11 वा (for च) —Ñ1 illeg from 18d up to वज्रमु in 19a —d) Ś1 N2 V2 B D1-4 8 10 पुरी च( V2 वा ) परिरक्षता, D11 पुरी सप्रतिरक्षता —After 18 D1 2-6 7 8 S ins

502* विदित स हि धर्मज्ञ शरणागतवत्सल ।
तेन मैत्री भवतु ते यदि जीवितुमिच्छसि ।
प्रसादयस्व त्व चैन शरणागतवत्सलम् ।
मा चास्मै प्रयतो भूत्वा निर्यातयितुमर्हसि ।
एव हि ते भवेत्स्वस्ति सप्रदाय रघूत्तमे । [5]
अन्यथा त्व हि कुर्वाणो वध प्राप्स्यसि रावण ।

[ (l 1) D1 3 4 विनीत D4 म इ, D7 8 Ct सर्व , D8 तव (for स हि) D8 धर्मिमा (for धर्मज्ञ) —(l 3) D7 9 G1 स (for त्व) —(l 4) G3 चैव (for चास्मै) D1 3 4 मा तस्मै प्रणतो भूत्वा (for the prior half) —(l 5) D5 तु (for हि) D1 3 4 मां (for स) —(l 6) D3 तु (for हि) D7 9 परा (for वध) D8 4 राघवात्, D7 9 वानर (for रावण) ]

19 Ñ1 illeg up to वज्रमु in a (cf v l 18) —a) D1 4 वज्रम्( meta ) D1 वच्छिद्र (sic) (for उत्सृष्ट) N2 D6 अतको मर्त्य, V2 B1-3 अंतकृन्मर्त्य, B4 धैर्यमुत्कृष्टो, D3 °ति सृष्ट, D6 वह्नि सत्सृष्टो (sic) (for वज्रमुत्सृष्ट) —b) B4 मानव (for वर्जयेद्) Ś1 D2 10 कुपितान्तक, Ñ1 B4 D1 3 4 11 कुपितोन्तक, Ñ2 V2 B1 3 D6 अनिलोनल T1 अन्तक कश्चित् (for अन्तकश्चिरम्) —c) Ś1 D10 त्वद्विधे, D2 4 8 11 त्वद्वधे (for त्वद्विध) D4 स तु T1 3 तु न (by transp) (for न तु) N1 D3 न वर्जयति सक्रुद्धो, Ñ2 V2 B1-3 D6 न तु त्वा( B1 त्वा च, B3 हि त्वा ) रावण क्रुद्धो, D1 तद्विध नातिसक्रुद्धो —d) D1 4 पालू, D11 T3 नाथ (for नाथ) B1( also as in text ) सनातन (for स राघव) —After 19 N1 partly illeg ins

503* तद्वध खलु पौ * रस्य * * * * * * * * ।
राघवस्याप्रमेयस्य क्रुद्धस्याक्लिष्टकर्मण ।

20 b) Ś1 Ñ1 B1 D1-4 10 11 सुदारुण Cv r m g t as in text (for महास्वनम्) Ñ1 V2 B1-3 D6 श्रोष्यसे घोर ( Ñ2 D6 मेघ )निस्वन —Ñ1 illeg for c (except शतक) —c) Ś1 विनिसृष्टस्य, B4 विसृष्टस्य (for विसृष्टस्य) D1 शतक्रतोरिवोत्सृष्ट —d) Ś1 B4 D1 4 10 11 निर्घातम्, D2

G 5 23 30
B 5 21 29
L 5 16 26

जनस्थाने हतस्थाने निहते रक्षसां बले ।
अशक्तेन त्वया रक्षः कृतमेतदसाधु वै ॥ २५
आश्रमं तु तयोः शून्यं प्रविश्य नरसिंहयोः ।
गोचरं गतयोर्भ्रात्रोरपनीता त्वयाधम ॥ २६
न हि गन्धमुपाघ्राय रामलक्ष्मणयोस्त्वया ।
शक्यं संदर्शने स्थातुं शुना शार्दूलयोरिव ॥ २७
तस्य ते विग्रहे ताभ्यां युगग्रहणमस्थिरम् ।
वृत्रस्येवेन्द्रबाहुभ्यां बाहोरेकस्य निग्रहः ॥ २८
क्षिप्रं तव स नाथो मे रामः सौमित्रिणा सह ।
तोयमल्पमिवादित्यः प्राणानादास्यते शरैः ॥ २९
गिरिं कुबेरस्य गतोऽथवालयं
सभां गतो वा वरुणस्य राज्ञः ।
असंशयं दाशरथेर्न मोक्ष्यसे
महाद्रुमः कालहतोऽशनेरिव ॥ ३०

इति श्रीरामायणे सुन्दरकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

25 D11 om 25 —ᵃ) D3 जनस्थान, D10 °न (for °ने) Ś1 D3.10 हत श्रुत्वा T2 महास्थाने, Ck t as in text (for हतस्थाने) D4 जनस्थानेव वा स्थाने (sic) —ᵇ) D3 नियत (for निहते) D10 दली (for बले) Ś1 निहत रक्षसा बल —D5 reads from हे in ᶜ up to वै in ᵈ in marg —For 25ᶜᵈ Ś1 D1.4.14 subst while Ñ1 cont after 511*

510* तीन स्वमाप्नुया दुःख शम्भोमार इवातुर ।

[ D1.4 मातवान् (for आस्य) D4 वैर (for दुःख) Ñ1 पूर्व मार D1.4 पूर्वाभाविनम् D8 पूतगात् (for शम्भोमरि) ]
—For 25 V2 B D1.8 subst while D3.4 ins after 24

511* जनस्थानवध श्रुत्वा हतौ च खरदूषणौ ।
पूर्ववैरमनुध्याय मामिहानीतवानसि ।

[ (1 r) Ñ1 illeg after जनस्था up to the prior half of ) 2 B2.4 D1 जनस्थाने (for °न) D3 खवौ (for वध) —(1 2) V2 अनुसधाय (hyprn) D2 इद ध्यात्वा D3.4 इद ध्यावन् (for अनुध्याय) D2.4 स्व(D3.4 मा)मिहाहृतवानसि (for the post half) ]

26 Ś1 D10 om 26 —ᵃ) Ñ1 illeg for आश्रम तु Ñ2 V2 B D2-4.6.11 आलय (for आश्रम) Ñ2 V3 B1.3 D6 हि, D5.7.9 तत् (for तु) B1 T1.3 तत (for तयो) Ñ1 B2 D2.3.11 शीघ्र (for शून्य) D1 अथ न तु तयोर्मध्ये (sic) —ᵇ) Ñ1 B1 D1.4.11 संतस्ते Ñ2 B1-3 आसीनत् V2 कासीनु, D6 मातात्र(sic) (for प्रविश्य) —ᶜ) Ñ2 V2 B D6 मृगया (for गोचर) D1 न तयोर् (sic) T3 न गतो (for गतयोर्) D4.11 गोचर च(D3 °रच) गतो भ्रातो —ᵈ) M3 पुरा (for [अ]धम) Ñ2 V2 B D6 तदानीं सिंहयोरिव D1-4.11 शृगाल इव सिंहयो ❀ Cv गोचर गतयो । गावो हि बाह्ये चरन्ति ।, Cr m गोचर गतयो मायामृगरूपमिन्द्रियार्थं गतयो ।, Cg गोचर गतयो । बाह्यदेश गतयो ।, Ck गोचर वनप्रदेश गतयो ।, Ct गोचर गतयो । मायामृगवृत्तान्त ज्ञातु गतयो । गोचर वनप्रदेश गतयोरिति वार्थ ❀

27 Ñ1 partially illeg for ᵃᵇ —ᵃ) Ñ2 V2 B D6 समाघ्राय (for उपाघ्राय) —ᵇ) D2 तदा M1 तयो (for त्वया) —ᶜᵈ) V2 शक्य हि B2 न शक्य D2 शक्य तु (for शक्य स) Ś1 D10 न शक्य स्वप्ने स्थातु शृगाल इव सिंहयो

28 ᵃ) Ś1 Ñ1 V2 B D1-4.6.10.11 विग्रहस्, Ñ1 T3 विग्रह, Cv as in text (for विग्रहे) —ᵇ) Ś1 Ñ1 D1.2.6.10.11 अ(Ś1 प्र, D1 नि D4 न)युक्तो मोहमास्थित, Ñ2 V2 B D5 अयुक्तोयमुपस्थित D2 प्रयुक्तो मोहमात्मन ❀ Cv r m यु(Cv सयु)गग्रहण युद्धजय ।, Cg युगग्रहण सयुगे जय ग्रहणम् । अस्थिरमसभावितम् । यद्वा युगग्रहण युद्धारम्भ ।, Ck युगग्रहण सहायसम्पादनम् ।, Ct युगग्रहण सहाय सम्पत्ति ❀ —ᶜ) Ś1 Ñ B3.4 D1-4.10.11 विष्णुभ्या (for बाहुभ्या) —ᵈ) Ś1 Ñ B3 D1.4.10.11 यथैवैकस्य, V2 B2 बाहोरेकस्य, B4 महानेकस्य, M3 बाहू° (sic) (for बाहोरेकस्य) Ś1 Ñ V2 B D1-6.8.10.11 निग्रह, D7.9 विग्रहे, M3 निग्रह, Cv as in text (for निग्रह)

29 ᵃ) V2 B1 D11 हि(D11 च) तत्र (for तव स) Ś1 Ñ V2 B D1.4.6.10.11 ससैन्यस्य (for स नाथो मे) ❀ Cg स नाथ इति पदच्छेद ❀ —Ñ1 partially illeg for ᶜᵈ —ᶜ) M2 [आ]दित्य (for [आ]दित्य) —ᵈ) M3 आदाय ते (for °स्यते) Ś1 V2 B D1.2.10.11 प्राणा नादाय यास्यति, Ñ2 D6 प्राणानप(D6 °न्यदि)हरिष्यति

30 ᵃ) D3 गिरे, D1.11 गिर (sic) Cv rp m g k t as in text Cr mp पुरीं (for गिरिं) Ś1 Ñ V2 B D1.2.4.6.10 गतस्त्वमालय D3.11 गत तदालय, D5 M2.3 गतोऽथवा य (M3 °द वा) (for गतोऽथवालय) —ᵇ) D2 समागतो (for सभा गतो) Ś1 Ñ2 B4 D1-4.10.11 नभो गतो वा (D11 °तं स्वा) वरुणस्य वा D2.4.10 वाऽस्य, Ñ2 V2 B1-3 D6 भयात्तो

२०

सीताया वचनं श्रुत्वा परुषं राक्षसाधिपः ।
प्रत्युवाच ततः सीतां विप्रियं प्रियदर्शनाम् ॥ १
यथा यथा सान्त्वयिता वश्यः स्त्रीणां तथा तथा ।
यथा यथा प्रियं वक्ता परिभूतस्तथा तथा ॥ २
संनियच्छति मे क्रोधं त्वयि कामः समुत्थितः ।
द्रवतो मार्गमासाद्य हयानिव सुसारथिः ॥ ३
वामः कामो मनुष्याणां यस्मिन्किल निबध्यते ।
जने तस्मिंस्त्वनुक्रोशः स्नेहश्च किल जायते ॥ ४
एतस्मात्कारणान्न त्वां घातयामि वरानने ।
वधार्हामवमानार्हां मिथ्याप्रव्रजिते रताम् ॥ ५
परुषाणि हि वाक्यानि यानि यानि ब्रवीषि माम् ।
तेषु तेषु वधो युक्तस्तव मैथिलि दारुणः ॥ ६
एवमुक्त्वा तु वैदेहीं रावणो राक्षसाधिपः ।
क्रोधसंरम्भसंयुक्तः सीतामुत्तरमब्रवीत् ॥ ७

G 5.21.0
B 5.22.7
L 5.17.7

(D6 °हृतो [sic]) वा वरुणालयात्पर. ❀ Cv गिरिं कुबेरस्य गत्वोऽपयास्येति सम्यक्। कुबेरस्य गिरिं गन्धमादनम्, अपयाय, अपक्रम्य।, Cg गिरिं कैलासम् ❀ —°) Ñ1 D7.9 T1 Ck t दाशरथेर्हि, D1-3.11 दाशरथिनं, G3 दाशरथस्य (sic) (for °थेने) Ñ V3 B1.2.4 D1.5 G1.3 Ct मोक्षसे, D8.11 मोक्षते (for मोक्ष्यसे) —d) B3 यथा (for महा) V3 द्रुम (for द्रुम) D3 G -गतो, Ck t as in text (for -द्रुतो) Ñ2 V2 B D6 ययाताने (for ऽग्नानेरिव) Ś1 Ñ1 D1-4.10.11 द्रुम(Ś1 D10 द्रुमो, D3 भुव) यथा कालगतो(D11 °ति) महावनि (Ś1 N1 D3.10 °ने) ❀ Ct विमोक्षसे प्राणानिति शेष। 'विमोक्ष्यसे' इति पाठः पाठ इति कतक ❀ —After 30 D2 ins राम

Colophon —*Sarga name* Ś1 Ñ2 V3 B1.3.4 D2.3.4.10.11 सीतावाक्य, Ñ1 रावण प्रति सीतावाक्य, B3 सीतावच, D1.4 रावणतिरस्करण —*Sarga no* (figures words or both) Ś1 Ñ1 D1.2.3.4.10.11 om Ñ2 D5 D6 23 V3 14 B1 M3 20, B3 22 B3 D6.7-9 T G M1.3 21 —After colophon, D3 concludes with कृष्ण, G with श्रीरामाय नम

## 20

M3 begins with श्रीरामाय नम, श्रीगुरवे शरण

1 a) Ś1 Ñ1 B1 D1-3.4.10.11 तद्वच, Ñ3 V B1.2 तु वच (for वचन) —b) Ś1 Ñ V B D1.4-10 राक्षसेश्वर, Cm as in text (for °साधिप) —c) Ñ2 V B D6 पुन (for तत) —d) B1 विप्रियां, D1 अप्रिया, D4 अप्रिय (for विप्रियं) D1 प्रियदर्शिना, D3.4 °दर्शन, D10 °दर्शनात्, Ct as in text (for प्रियदर्शनाम्)

2 ab) B3 D3.4 सान्त्वयित्वा (for °यिता) D11 तस्य (for वश्य) D3 यथा यथा (for तथा तथा) D1 यथा सान्त्वयिता वश्य स्त्रीणा भक्ता यथा तथा —c) D3.4.11 भूत (for यथा) D1 यथा सान्त्वयिता भूय —d) D6 om (hapl) second तथा

3 a) V2 D10.11 म, D1 य D9 त, Cr m g k t as in text (for म) D6 च (for मे) V1 कोप, D1 क्रोधम (sic) (for क्रोध) —b) V3 D1.3.4.9.11 M1 समुत्थित, B1 उपस्थित, M1 समुच्छ्रित, Cm k t as in text (for समुत्थित) —cd) Ñ2 V B3.4 D6 दुर्गम्, B1 (marg also as in B3) तु रम् (for मार्गम्) V2 मास्थाय (for मासाद्य) Ś1 Ñ1 D1.4.10.11 उ(D1 तमु [hypm]) दिर्णिता (Ś1 N1 D10.11 °ण) बलाद्गत हयानामिव सारथि ❀ Cr m g अमार्गमिति च्छेद 1, so also Ck t ❀

4 V1 illeg for 4–9b —a) Ñ2 V2 B M2 काम, D6 गत (sic) (for वाम) —b) D2 तु परिवध्यते, D6 उपनिवध्यते, T2 तु किल बध्यस (for किल नि°) —c) D11 येन (for जने) Ś1 Ñ2 V2 B D1.6.10.11 T2 G2 Cr m k t मनुक्रोश, D1.4 अनुक्रोध D3 न तु क्रोध D1 स्वनु°, Cv g as in text (for त्वनुक्रोश) —d) Ñ2 V2 B D6 खलु (for किल) D2.3.4 प्रतिकूलेपि जायत

5 V1 illeg for 5 (cf v l 4) —a) D11 तस्मात् (subm) (for एतस्मात्) —b) G3 नाशयामि (for घातयामि) —c) Ñ2 V3 B D6 अप(B2 °व)मानार्हां D3 मम मानार्हां (for अवमानार्हां) —D2 om 5d–7a —d) D1.4 वृथा (for मिथ्या) Ñ1 D6 -प्रव्रजिता (sic) V2 D1.7.9 T2 M3 Ck t -प्रवचन, G1 प्रभाजिते G2 प्रव्राजने, Cr m g tp as in text (for -प्रव्रजिते)

6 V1 illeg D2 om 6 (cf v l 4 and 5) —a) B1 D3.6 M1 च, B4 D1.8.10 T1.2 M1.3 [इ]ह (for हि) —b) D3 om (hapl) first यानि Ñ1 B1 D8.10 हि, T2 M3 मा (for माम्) —d) G1 रावण (sic) (for दारुण)

7 V1 illeg for 7 (cf v l 4) D2 om 7a (cf v l 5) Ñ2 V2 B D6 om 7 D3 reads 7 after 9 —b) Ś1 D10 राक्षसपुंगव, D1-4.11 राक्षसेश्वर (for राक्षसाधिप) —c) M3 संरक्त (for -संरम्भ) D3 संयुत (for °क्त) D6 G3 क्रोधसंरक्तनयन —d) T सीता पुनरथाब्रवीत् —After 7, Ś1 Ñ1 D1-4.10.11 ins

G 5 24 7 B 5 22 8 L 5 17 32 द्वौ मासौ रक्षितव्यौ मे योऽवधिस्ते मया कृतः ।
ततः शयनमारोह मम त्वं वरवर्णिनि ॥ ८
द्वाभ्यामूर्ध्वं तु मासाभ्यां भर्तारं मामनिच्छतीम् ।
मम त्वां प्रातराशार्थमारभन्ते महानसे ॥ ९
तां तर्ज्यमानां संप्रेक्ष्य राक्षसेन्द्रेण जानकीम् ।
देवगन्धर्वकन्यास्ता विषेदुर्विपुलेक्षणाः ॥ १०
ओष्ठप्रकारैरपरा नेत्रवक्त्रैस्तथापराः ।
सीतामाश्वासयामासुस्तर्जितां तेन रक्षसा ॥ ११
ताभिराश्वासिता सीता रावणं राक्षसाधिपम् ।
उवाचात्महितं वाक्यं वृत्तशौण्डीर्यगर्वितम् ॥ १२

512* स्त्रीत्येतद्वचनं भद्रे स्वभावमस्वमाश्रिता ।
भाषसे परुषाण्येव विश्रब्धं गतसाध्वसा ।
न युक्तं परुषं वक्तुमीश्वरे ह्यप्रियाणि च ।
जनस्य पश्यतो मध्ये प्रभविष्णोर्विशेषतः ।
अलंकारो हि नारीणां दाक्षिण्यं परमुच्यते । [5]
दुर्लभं नच ते सीते कथं भर्तुः प्रिया ह्यसि ।
यादृशोऽयं मम क्रोधो यथावस्थस्त्वचलस्थिता ।
वधाय वै सृजेयं त्वां स्त्रीभावात्तु न वध्यसे ।

[(l 1) D2 4 विदित (for वचन) D1 स्त्रीत्येव तद्धि भद्र D3 स्त्रीणां स्वद्वचनाद्भद्र (for the prior half) Ñ1 D3 त्वमवध्या व्यवस्थिता D4 स्वमवध्यत्वमागता D11 स्वमवध्यत्व समाश्रिता (hypm) (for the post half) —(l 2) Ś1 D10 परुष रेव D4 °ण्येव (for परुषाण्येव) Ñ1 विश्वस्ता D11 विशुद्ध (for विश्रब्ध) D10 साधु मा (sic) (for साध्वसा) —(l 3) Ś1 (after corr वाक्य) वक्तुं Ñ1 D11 युक्त D10 वक्त्य (sic) (for युक्त) Ś1 (after corr as above) युक्तम् (for वक्तुम्) Ñ1 D11 °श्वरो (sic) (for °रे) D2-4 वा (for च) D1 ईश्वरस्याप्रियाणि च (for the post half) —(l 4) Ś1 (before corr as above) पार्श्वे Ñ1 D2 4 11 महतो D3 विदतो (for पश्यतो) D1 प्रभुविष्णुर् D2 प्रभविष्णुर् D11 प्रभोर्विष्णोर् (for प्रभविष्णोर्) —(l 6) D2 तत्र D11 तन (for नच) D4 सीते ते (by transp) (for ते सीते) —(l 7) D10 यथा वा (for यथावस्) Ś1 यथा वा त्वमसि स्थिता D11 यथा त्वमनवस्थिता (for the post half) —(l 8) Ñ1 D1 2 10 11 [अ]वध्योय (Ñ1 D1 °द) D4 न वधाह (for वै सृजेय) D3 यथा यथा स्थिरोऽर्थं (for the prior half) D11 स्त्रीभावो (sic) D1 हि भाषसे (for तु वध्यसे) Ñ1 D2 4 स्त्रीभावेनैव (D2 °नापि D3 °न तु D4 नाग्नि) भाषसे (D3 °ते) (for the post half) ]

V3 त्वं प्रतिवासोय (corrupt) D7 9 त्वां प्रातराशार्थे (for त्वां प्रातराशार्थम्) Ś1 D10 ततस्त्वां राक्षसाः सर्वे, Ñ1 D2 4 11 ततस्त्वा प्रातराशार्थे (D11 °र्थी [sic]) (for °) D6 G2 M2 Cvm आलभते Cg as in text (for आरभन्ते) Ś1 Ñ V B1 2 4 D1-4 7 9 11 सूदास्ते (Ś1 D1 4 10 सूदा छे)त्स्यन्ति खड्गैः (for °) B2 अहं त्वां छेदयिष्यामि खड्गेन शत्रुसदृश ॥ Cg आरभन्त आलभन्ते। लभोरभेद । आलम्भ स्पर्शहिंसयोरित्यमरः ॥—After 9 Ñ2 V B D6 ins

513* न हि मैथिलि रामस्त्वां प्राप्स्यते कामसाध्वस ।
हिरण्यकशिपुर्लक्ष्मीमिन्द्रहस्तगतामिव ।
न च मैथिलि रामस्त्वां पुनः समुपलप्स्यते ।
पुरा बलाकैरसितैर्मेघैश्चन्द्रमिवावृतम् ।

[(l 1) B1 च (for हि) V आप्नुत D6 आपमो (sic) (for आप्स्य) B2 आप्स्यसे कामं मे भर्ता (sic) B4 पुनः समुपलप्स्यते (for the post half) —(l 2) Ñ2 V3 B1 4 हिरण्यकशिपोर् (for °पुर्) —(l 3) D6 हि (for च) —(l 4) D6 पुरो (for पुरा) B1 घनैर्नीलैरसितैर् (for the prior half) B4 घनैश् (for मेघैश्) D6 [आ]वृतां (for °तम्) ]

—After 9 D5 reads 7

10 a) Ñ2 D6 संतर्ज्यमाना B4 D7 9 ता म त्वमाना Ñ2 V2 B D6 सलक्ष्य V3 समीक्ष्य (for संप्रेक्ष्य) —b) Ñ2 V B D6 दशग्रीवेण (for राक्षसेन्द्रेण) —c) Ś1 B1 ता Ñ1 D2 11 च (for ता) —d) D1 5 निषेदुर् (for विषेदुर्) Ś1 D1 10 कमलेक्षणा, D7 9 M3 विक्रोशे° (for विपुलेक्षणा )

नूनं न ते जनः कश्चिदस्ति निःश्रेयसे स्थितः ।
निवारयति यो न त्वां कर्मणोऽस्माद्विगर्हितात् ॥ १३
मां हि धर्मात्मनः पत्नीं शचीमिव शचीपतेः ।
त्वदन्यस्त्रिषु लोकेषु प्रार्थयेन्मनसापि कः ॥ १४
राक्षसाधम रामस्य भार्याममिततेजसः ।
उक्तवानसि यत्पापं क्व गतस्तस्य मोक्ष्यसे ॥ १५
यथा दृप्तश्च मातंगः शशश्च सहितौ वने ।
तथा द्विरदवद्रामस्त्वं नीच शशवत्स्मृतः ॥ १६
स त्वमिक्ष्वाकुनाथं वै क्षिपन्निह न लज्जसे ।
चक्षुषो विषयं तस्य न तावदुपगच्छसि ॥ १७
इमे ते नयने क्रूरे विरूपे कृष्णपिङ्गले ।
क्षितौ न पतिते कस्मान्मामनार्य निरीक्षतः ॥ १८
तस्य धर्मात्मनः पत्नीं स्नुषां दशरथस्य च ।
कथं व्याहरतो मां ते न जिह्वा पाप शीर्यते ॥ १९

G 5 21 19
B 5 22 19
L 5 17 24

वृत्तशौटीर( V₂ B₁ °र्य )गर्विता, D₈ वृत्तशौटीर्यमास्थिता, D₁ वृत्तशौडीर्यगर्विता —After 12, Ś₁ Ñ₁ D₁-₄ ₁₀ ₁₁ ins

514* तस्य राक्षसराजस्य सीता न मसृषे वच ।
पुण्यकीर्तिरियाकीर्तिं पुन कोपात्युवाच ह ।

[(l 2) Ś₁ D₁₀ शोकाद् (for कोपात्) D₃ ₈ न (for ह) D₁₁ अपवाक्यमागिरां (for the post half) ]

13 ᵃ) V₂ D₈ ₈ ₁₁ ते न (by transp) D₆ वै ते, D₉ न त (sic) (for न ते) G₁ damaged for जन क —ᵇ) D₁₀ Ct अस्मिन् Cr m g k as in text (for अस्ति) D₃ ₇₋₉ T₂ ₃ Ct नि श्रेयसि, Cr m g k as in text (for नि श्रेयसे) Ñ₂ V B D₆ पर, M₁ रत (for स्थित) —ᶜ) Ś₁ D₁₀ M₁ हि, D₂ [स]स, Cm g t as in text (for न) —D₉ reads 13ᵈ (except कर्म) in marg —ᵈ) V₂ D₃ विगर्हित (sic), D₁₁ विगर्हिता (sic) —After 13 D₃ ₄ ins

515* देवानामपि पूज्योऽह यद्व्वीपि सुकुत्सितम् ।
भास्करवाशकर छेदद्दूरेरैरोचनेयथा ।

14 ᵃ) Ñ₂ V B D₁ ₆ न (for मा) D₁ [म]ह, G₁ यो (for हि) —ᵇ) Ś₁ D₁ ₈ ₁₀ शतक्रतो, V₂ शचीपति (for शचीपते) —ᵈ) Ñ₁ V B₁ ₄ D₈ [ठ]त, B₃ G₁ मा (for क) —For 14ᶜᵈ, Ś₁ Ñ₁ D₁-₄ ₁₀ ₁₁ subst

516* प्रार्थयेतापि मनसा त्रिषु लोकेषु कोऽपर ।

[ Ñ₁ D₈ प्रार्थयिता, D₃ प्राथये न D₁₁ प्रार्थये च (for प्रार्थयेत) Ñ₁ illeg for [अ]पि मनसा Ś₁ D₁₀ क पर, D₁ क पुमान् D₃ नापर (for कोऽपर) ]

15 ᵃ) D₃ राक्षसाधिप (for °धम) —ᵇ) Ñ₂ V B D₆ पत्नीम् (for भार्याम्) —ᶜ) D₁₁ उक्तवा त्वं (for उक्तवान्) Ś₁ Ñ V B₂ ₄ D₃ ₄ ₁₀ ₁₁ मामिद वाक्य, B₁ ईदश वाक्य, D₁ ₂ ₄ त्वमिद वाक्य, M₁ अपि यत्पाप, Ct as in text (for असि यत्पापं) —ᵈ) D₁ क्व विमोक्ष्यसे (for तस्य मोक्ष्यसे) Ś₁ D₁₀ शुभतस्त्व( D₁₀ °तोपि ) न मोक्ष्यसे, Ñ₂ V B D₆ द्रक्ष्यसे यस्य( B₁ °त्र ) निश्चयं ⊛ Cr m तस्य तस्मात् I, so also Cg ⊛

16 ᵃᵇ) D₃ को हि (for यथा) V₂ B₁ दृष्टश्च, D₈ [भ]तिदत्त ; D₁₀ दुष्टश्च, Cm k t as in text (for दृप्तश्च) Ś₁ D₁₀ सदृशो भवेत् Ñ V D₂ सदृशो युधि( Ñ₁ V₁ भुवि ), D₁ विहितौ वने, M₂ ₃ Cv g महितौ वने, Ck t as in text (for सहितौ वने) B D₆ शशवत्( D₁ ₄ °श्च, B₂ °शाश्च )सदृशो युधि( D₆ भुवि ) (for ᵈ) D₁ ₄ को हि दृप्तस्य मातस्य शशक सदृशो भवेत्, D₁₁ न जातु शशको दृप्तो मतंगमदृशो भवेत् ⊛ Cm 'महितौ' इति पाठ ⊛ —ᶜ) D₁₁ T₃ यथा Cv m g k t as in text (for तथा) Ñ₁ V B D₆ मातंगवद्, D₁ स द्विरदो, D₄ हि द्विरदो (for द्विरदवद्) —ᵈ) Ñ V₂ B₁ ₄ D₅ ₆ ₁₁ T₂ M₂ नीच, Ck as in text (for नीच) B₂ त्वमप्य (for त्व नीच) Ś₁ D₁₀ -सदृशोपम, V₂ °समित, B₁-₃ D₆ शशवन्मत, D₂ शशक स्मृत, D₁₁ शशकसम (unmetrical) (for शशवत्स्मृत) D₁ ₄ शृगाल (D₄ त्व चैव) शशको मत

17 ᵃ) Ś₁ D₁-₄ ₁₀ ₁₁ नाथ त, Ñ₂ V B D₆ -नाथाद् (for नाथ वै) —ᵇ) V₂ क्षिपन्निन, D₁ °न्नाणो (for क्षिपन्निह) Ś₁ Ñ₁ B₁ D₃ ₄ क्षिप्र प्राप्य क्षिपन्निह( Ñ₁ B₄ D₄ °नक्ष्य )से, Ñ₂ V₂ B₂-₃ क्षिपन्निह( B₁ ₂ °चैव ) न बुध्यसे D₂ क्षिप न विलक्षिष्यति D₄ किमेवमत्रसन्धम D₁₀ क्षिप्र प्राप्य नदिष्यसि, D₁₁ पश्यन्नपि न पश्यति —G₂ om 17ᶜᵈ —ᶜ) B₁ ₃ D₃ ₈ ₈ ₁₁ T₂ ₃ M₂ ₃ चक्षुषोर् (for चक्षुषो) Ñ V B D₃ ₈ विषये, D₁ ₁₁ विषयस् (for विषय) D₈ चक्षुषी विषमे तस्य —ᵈ) Ś₁ V D₂ ₁₀ M₁ Ck t यावद्, Cg as in text (for तावद्) Ñ₂ V B D₆ अत्र( B₂ °सि ) तिष्ठसे, D₁ ₁₁ उपतिष्ठसि (for उपगच्छसि) ⊛ Cr m उपगच्छसि । पलायनं भूतं इत्यर्थः ⊛

18 ᵇ) Ñ₂ V B D₆ त्रिवमे D₃ ₈ T₃ G₁ विकृते (for विरूपे) M₂ कृत (for कृष्ण) —ᶜ) Ñ₂ V B D₆ क्षिप्र (for क्षितौ), G₂ ₃ M₁ नि, Ck t as in text (for न) Ś₁ Ñ₁ D₁ ₃ ₄ ₁₀ ₁₁ T₂ G₁ पतत, B₂ स्फुरिते Ck t as in text (for पतिते) G₁ किं नु (for कस्मात्) D₂ क्षिप्र नाशतवस्यस्माद् —ᵈ) G₂ M₁ अनार्या (sic) G₂ निरीक्षित (for °क्षत) Ś₁ Ñ₁ D₁-₄ ₁₀ ₁₁ ममानार्य निरीक्षमाण( D₁ विलोकयता )स्, Ñ₂ V₂ B₁ ₃ ₄ अथैव( B₁ °व ) मा( Ñ₂ B₁ मा ) हि पश्यत V₁ B₂ अद्य मामभिपश्यत, D₆ अथैवमभिपश्यते (sic)

19 ᵇ) D₁ दशरथात्मज (for दशरथस्य च) —After 19ᶜᵈ, B₂ ins

G 5.24.20 B 5.22.20 L 5.17.25 असंदेशात्तु रामस्य तपसश्चानुपालनात् ।
न त्वा कुर्मि दशग्रीव भस्म भस्मार्हतेजसा ॥ २०
नापहर्तुमहं शक्या तस्य रामस्य धीमतः ।
विधिस्तव वधार्थाय विहितो नात्र संशयः ॥ २१
शूरेण धनदभ्रात्रा बलैः समुदितेन च ।
अपोह्य रामं कस्माद्धि दारचौर्यं त्वया कृतम् ॥ २२
सीताया वचनं श्रुत्वा रावणो राक्षसाधिपः ।
विवृत्य नयने क्रूरे जानकीमन्ववैक्षत ॥ २३
नीलजीमूतसंकाशो महाभुजशिरोधरः ।
सिंहसत्त्वगतिः श्रीमान्दीप्तजिह्वोग्रलोचनः ॥ २४
चलाग्रमकुटः प्रांशुश्चित्रमाल्यानुलेपनः ।
रक्तमाल्याम्बरधरस्तप्ताङ्गदविभूषणः ॥ २५
श्रोणीसूत्रेण महता मेचकेन सुसंवृतः ।
अमृतोत्पादनद्धेन भुजगेनेव मन्दरः ॥ २६

517* कथ्या ननकरानस्य रथानस्य भुवि सर्वत ।

—ᶜ) B₃ च्यादृस्त (for °तो) Ñ₂ V B D₆ दास( B₃ °प) D₈ वापि (for मा ते) —ᵈ) Ś₁ Ñ₁ D₃.₄.₅.₁₀.₁₁ निह्वा पाप न (by transp) D₁ निह्वा पवित्रं, D₂ न त निह्वापि (for न निह्वा पाप) D₇ M₁ Ck t पाप शीर्यसि T₁.₂ M₂ च्यवशीर्यंते G₃ वावशीर्यत (for पाप शीर्यत) Ñ₂ V B D₆ जिह्वा न पतिता तव( Ñ₂ D₆ भुवि )

20 ᵃ) Ñ₁ असमद्वात् Ś₁ Ñ V B₁.₃.₄ D₁₋₄.₈.₁₁ हि B₂ D₁₀ च (for तु) —ᵇ) D₁ [अ]नुलेपनात् (for °पालनात्) —ᶜ) D₃ M₁ त्वा (for त्वा) G₁ कुर्यां (for कुर्मि) Ś₁ Ñ₁ B₄ D₁₋₄.₁₀.₁₁ न त्वा क( D₃ तत्क )रोम्यह कुद्धा Ñ₂ V B₁₋₃ D₆ न त्वा करोमि पापात्मन् —ᵈ) Ś₁ V₁ B D₁.₄.₁₀.₁₁ G₃ भस्मसादद्य( D₁₄ °त्वेन G₃ °द्वाम ) तेजसा( Ś₁ °स ) V₃ तस्या * द्य तनया M₃ भस्माद्ध निजतेजसा ✩ Cg कुर्मि करोमि। हदनविकरणप्रत्ययलोपा वार्षी। भस्मार्हं भस्मीकरणार्हं। ( Cg तेजसा पातिव्रत्यप्रभावेन )। Cm भस्मार्हा भस्मीकरणार्हा। कुर्मि करोमि। भस्मार्हा भस्म इति पाठ। Ck हे भस्मार्ह भस्मीकर्तुं योग्य त्वत्तेजसा स्वीयेन पातिव्रत्येन न भस्म कुर्मि करोमि। Ct भस्मार्हेण भस्मजननसामर्थ्यवता तेजसा स्वीयपातिव्रत्यतेजसा न भस्म कुर्मि करोमि ✩

21 ᵃ) B₃.₄ नापकर्तुम्, D₈ नाप हर्तुम् (sic), D₂ नोप° (for नापहर्तुम्) M₃ शक्या (for शक्या) D₁.₄ ना( D₁ मो )पहर्तुं मया शक्य —ᵇ) T₂.₃ G₃ M₃ त्वया (for तस्य) Ñ₁ V B₁.₃ D₆ जीवत G₁ तेजसा (for धीमत) —ᶜ) D₁ विधिस्तव हितार्थाय —ᵈ) Ś₁ Ñ V B₁₋₃ D₃.₅.₈.₁₀.₁₁ [ऽ]त्र संशय ( Ś₁ D₃.₈.₁₀ °य ) B₄ D₁.₄ (ऽ)त्र( D₁ (ऽ)सौ ) न संशय (for नात्र संशय)

22 Ñ₁ B₁₋₃ D₆ om 22 —ᵇ) B₄ समुदितेन (for °न) D₃ om च (subm) D₁₀ बलेन मुदितेन च —V₃ om 22ᶜᵈ —ᶜ) D₃ क्रमात्व D₇.₈ Ct कस्मात्विद् (for कस्माद्धि) Ś₁ Ñ₁ D₁₀ कस्मात्त्व च ते राम V₂ D₁₁ तथा परोक्षे( V₃ °ते ) रामस्य( D₁ रामे हि ), B₄ D₇.₈.₄ स्वकारणाद्रामं हि( B₁ रामे हि D₁ ते रामं ) —ᵈ) D₂ दारचौर्य (for °र्यं) Ś₁ Ñ₁ V₃ B₄ D₁₋₄.₁₀.₁₁ हृतं, Ct as in text (for त्वया)

23 ᵃ) Ś₁ Ñ V₃ B D₁₋₄.₈.₁₀.₁₁ वहूचा। V₃ तु वच (for वचन) —ᵇ) D₃ राक्षसेश्वर (for °साधिप) —D₁ om 23ᶜ–24ᵇ —ᶜ) T₃ विकृत्य, Cg as in text (for विवृत्य) Ñ₂ V B₃ रौद्र (for क्रूरे) B₄ ... नयनै रौद्रैर् —ᵈ) T₂ सीता ताम् (for जानकीम्) Ś₁ Ñ₁ D₁₀ वाम वैक्षत, V₃ D₁.₃ °वैक्ष्यत, D₃ समवै° (for अन्ववैक्षत)

24 D₈ om 24ᵃᵇ (cf v l 23) —ᵇ) Ñ₁ D₃ परिमह (for शिरोधर) —ᶜ) Ś₁ D₁₀ खेलगति, V₃ सत्त्वपति, D₃.₄ T₁.₂ M₃ सत्त्वगत, D₆ M₁ Ctp सहनन, Cg t as in text (for सत्त्वगति) D₁₁ धीमान् T₁.₂ G₂.₃ धीरो (for श्रीमान्) B₃ सिंहविक्रमशालिनो (sic), D₃ सिंहसत्त्वभुज श्रीमान —ᵈ) Ś₁ Ñ₁ D₃.₈.₁₀.₁₁ G₁ M₂.₃ Cg जिह्वाग्र (for जिह्वोग्र) Ñ₂ V₁ B D₆ दीप्तास्यो दीप्तलोचन V₃ erroneously reads 25ᵈ (cf v l ) in place of 24ᵈ

25 ᵃ) D₃.₁₁ चलार्क, D₆ शिखाग्र (for चलाग्र) Ś₁ Ñ V B D₁.₈₋₁₀ मुकुट D₇.₁₁ T₁.₂ M₁ Cg t मुकुट, G₃ M₁ मकुट (for मकुट) V₃ न चाग्र मुकु? (sic) —ᵇ) B₃ गन्ध (for चित्र) D₈ माल्य (for माल्य) —After 25ᵃᵇ, D₄ erroneously repeats (var ) 24ᵈ–25ᵇ —ᶜᵈ) M₃ रक्ताम्बरधरः श्री* (for °) D₁ M₂ स्तप्ताङ्गद, D₁₁ तप्ताङ्गद G₃ सहाङ्गद, Cg as in text (for तप्ताङ्गद) D₄ विभूषित (for °षण) Ñ₁ V B D₆ रक्ताम्बरधर श्रीमांस्तप्तकाञ्चनभूषण

26 Ñ₂ V B D₆ transp 26 and 27 —ᵃ) D₃.₄ श्रोणि, Cv r m k t as in text (for श्रोणी) —ᵇ) Ś₁ D₁₀ काञ्चनेन, V₁ ....न, B₁ (marg also) मेचकेन (sic) B₃ पाण्डुरेण, D₁.₄ सुदृढेन; D₃.₁₂ पाण्डुरेण (for मेचकेन) D₃ सुसंवृत (sic) D₆ विराजित, D₁₁ सुसंवृत (sic) (for सुसंवृत) —ᶜ) Ś₁ Ñ V B D T₂ अमृतोत्पादने न( B₃ D₂.₃.₁₃ च )द्धो —ᵈ) B₂.₃ D₁.₃₋₄.₁₁ T G₁ M₃ भुजगेनेव, B₂.₄ भुजगेनैव —After 26 D₁.₇.₈ S ins

518* तावयो म परिवृत्ताभ्यां भुजाभ्यां राक्षसेश्वर ।
शुशुभे ऽचलसंकाश शृङ्गाभ्यामिव मन्दर ।

[(l 1) D₃ G₁ तावयो Cg t as above (for तावयो) T₁ G₃.₃ M₃.₄ सं (for म), ✩ Ch सुवर्णा विद्युदाभ्यां कल्पितरत्नम्।; Ct सुवर्णस्य महत्या सुधया रञ्जिता रक्तसुमनस्त्रिति विस्तरम्। तावद्यस्तु सुवर्णपरिवृतरत्नमणि ✩ ]

तरुणादित्यवर्णाभ्यां कुण्डलाभ्यां विभूषितः ।
रक्तपल्लवपुष्पाभ्यामशोकाभ्यामिवाचलः ॥ २७

अवेक्षमाणो वैदेहीं कोपसंरक्तलोचनः ।
उवाच रावणः सीतां भुजंग इव निःश्वसन् ॥ २८

अनयेनाभिसम्पन्नमर्थहीनमनुव्रते ।
नाशयाम्यहमद्य त्वां सूर्यः संध्यामिवौजसा ॥ २९

इत्युक्त्वा मैथिलीं राजा रावणः शत्रुरावणः ।
संदिदेश ततः सर्वा राक्षसीर्घोरदर्शनाः ॥ ३०

एकाक्षीमेककर्णां च कर्णप्रावरणां तथा ।
गोकर्णीं हस्तिकर्णीं च लम्बकर्णीमकर्णिकाम् ॥ ३१

हस्तिपाद्यश्वपाद्यौ च गोपादीं पादचूलिकाम् ।
एकाक्षीमेकपादीं च पृथुपादीमपादिकाम् ॥ ३२

G 5 24 0
P 4 22 31
L 5 17 0

27 Ñ3 V B D6 transp 26 and 27 —[a]) B3 प्रदीप्तादित्य, B4 बालादित्य B1 (marg also as in text) -सकाश (for वर्णाभ्या) —[b]) T2 विराजित (for विभूषित) —Ś1 D10 om 27[c]–28[b] —[c]) T1 3 G3 पुष्प (for रक्त) B1 शाखाभ्याम् (for पुष्पाभ्याम्) G1 रक्तपुष्पपल्लवाभ्याम् —[d]) D1 यथा (for इव) —After 27 Ñ1 ins

519* स हि राजा राक्षसानां रावणो लोकरावण ।

while D4 T1 3 G M1 3 ins

520* स कल्पवृक्षप्रतिमो वसन्त इव मूर्तिमान् ।
श्मशानचैत्यप्रतिमो भूषितोऽपि भयंकर ।

[(l 1) D1 (after corr as above) G1 स (for स)
—(l 2) M1 -सदृशो (for प्रतिमो) ※ Cr श्मशानचैत्यवद्विम श्मशानवृक्षसदृश । Cg चैत्य श्मशानवृक्ष श्मशानमण्डपो वा ।, Ck श्मशानचैत्यप्रतिम इति । तदुभयसदृशरमणपरिहार्यदर्शनवानित्यर्थ ।, Ct वसन्त इव भूषितोऽपि श्मशानचैत्यप्रतिमस्तदुभयवत्परिहार्य[illegible] । चैत्य बुद्धायतनम् । अत एव भयकर ※ ]

28 Ś1 D3 10 om 28[ab] (for Ś1 D10, cf v l 27) D4 om 28 —[b]) Ñ2 V B D1 4 क्रोध (for कोप) —[c]) Ñ1 वचन (for रावण) Ñ2 V B वाक्य (for सीता) —After 28[c] Ñ1 ins

521* [illegible] तु लोकवहितम् ।
प्रकम्पमान सुमुख

—[d]) B4 reads भुजंग in marg V2 D1 निःश्वस, D5 7 8 11 S निःश्वसन् (for निःश्वसन्) B1 भुजगाम इव श्वसन्

29 D5 om 29–30 —[a]) B4 [अ]भि, D3 [अ]सि (for [अ]भि) Ś1 Ñ V1 B1 2 4 D1–4 8 10 समुत्थाम्, V2 B3 समुत्थम्, D11 सम्पन्नाम्, T1 3 सपत्ते, T2 सपत्नाम् (for सम्पन्नम्) —[b]) B2 D11 अर्थहीनाम् (for °नम्) Ñ1 अनर्थकम्, V1 अनुव्रत, D1 3 T2 अनुव्रता Ct as in text (for अनुव्रते) Ś1 Ñ2 B1 4 D2 6 10 अर्थहीनामनुव्र(D2 °त्र)ता, D3 मम शत्रुमनुव्रता —After 29[ab], Ñ1 ins

522* आर्यमनार्यचरितामार्यैर्विगर्हित च यत् ।
रावणानुगतं मरं तु प्रसूते तु मानुषि ।

—[c]) D2 [ए]व (for त्वा) —[d]) Ñ2 V B D6 Ct [उ]दित, D2 [उ]रात (for [ओ]जसा) ※ Cm अनयेनेति श्लोक केषुचित्कोशेषु नास्तीति कृत्वा न व्याख्यात ।, Ck अनयेन धराजधर्मेण । सूर्य इति । उदित इति शेष ।, Ct अनयेनानीत्या युक्तम् । अर्थहीन प्रयोजनहीन व्रत राम वा । 'अनुव्रते' इति सबोधनम् ※

30 D5 om 30 (cf v l 29) —[a]) B1 तत्र, T3 सीता (for राजा) —[b]) Ś1 D10 शत्रुकर्षण, Ñ2 V B D6 लोकरावण (for शत्रुरावण) D11 राक्षसाधिपरावण —[c]) D7 9 सदृशे (for संदिदेश) —[d]) D3 राक्षसीं (sic) (for राक्षसीर्) D8 भीमदर्शना

31 [a]) Ñ1 चैवकर्णां, D4 10 एककर्णां (for एककर्णां) D1 शुकाक्षारिकर्णाश्च, D3 4 शुकाक्षीं चककर्णीं च, D11 अकर्णां सेकर्णीं च —[b]) D3 कर्ण (for कर्ण) D2 प्रावरणाम्, D3 °र्णी (for प्रावरणा) Ś1 Ñ1 D3 4 8 10 11 G2 M2 अपि (for तथा) ※ Cv g प्रधानप्रधानसूते एकाक्ष्यौ द्वे स्त । अत पश्चाक्षया पुनरुपादानम् (Cg °धानसूते द्वे एकाक्ष्यौ । अतो न पुनरुक्ति । अथवा अक्षमिन्द्रियम् । एकाक्षीमेकेन्द्रियाम् । श्रोत्रनासादावेकमात्रवतीमित्यर्थ ) ।, Cr m t एकाक्षीमिति द्विरुपादानम् । व्यक्तिभेदात् ※ —[c]) D1 4 लम्बकर्णी, D3 मेघकर्णीं (for हस्तिकर्णीं) D3 गोकर्णां हस्तिकर्णां च —[d]) D1 4 हस्तिकर्णी(D4 °र्णाम्) G1 शङ्कुकर्णीम् (for लम्बकर्णीम्) D4 सकर्णिका (for °काम्) —For 31–33 Ñ2 V B D6 subst 524*

32 For subst in Ñ2 V B D6, cf v l 31 and 33 —[a]) T2 [अ]श्वपद्य (for °पद्यौ) Ś1 D10 हस्तिपादा च गोपादाम्, Ñ1 D4 11 हस्तिपादीमपादीं च (D4 °दीश्च), D1 हस्तिपादी अपादीश्च, D3 5 हस्तिपादीं श्व(D3 श्वा)पादीं च, D3 4 हस्तिपद्याश्वप(D3 °पा)दी च, D8 हस्तिपादाश्वपादा च, T1 3 हस्तिपादाश्वपादाश्च(T3 °पदौ च), G3 हस्तिपदाश्वपदाश्च —[b]) D2 गोपादीं, D1 M3 गोपादीं T1 3 G3 गोपादान (for गोपदीं) Ś1 D10 अपादां पादमू(Ś1 °मू)लिका, D3 11 गोपा(D11 °प)दीं पादमूलिका, D1 गोपादीं पादमूलिका —D2 om 32[c]–33[b] Ś1 Ñ1 D3 10 11 om 32[cd] —[cd]) T1 2 G1 3 M1 एकपादां (for °दीं) T1 3 G3 पृथुपादाम् (for °पादीम्) D1 अपादिका (for अपा°) D1 3 द्वयोन्मयपादीश्च पृथुपादीश्पादिका

G 5 24 0 B 5 22 35 L 5 17 37

अतिमात्रशिरोग्रीवामतिमात्रकुचोदरीम् ।
अतिमात्रास्यनेत्रां च दीर्घजिह्वामजिह्विकाम् ।
अनासिकां सिंहमुखीं गोमुखीं सूकरीमुखीम् ॥ ३३
यथा मद्वशगा सीता क्षिप्रं भवति जानकी ।
तथा कुरुत राक्षस्यः सर्वाः क्षिप्रं समेत्य च ॥ ३४
प्रतिलोमानुलोमैश्च सामदानादिभेदनैः ।
आवर्तयत वैदेहीं दण्डस्योद्यमनेन च ॥ ३५
इति प्रतिसमादिश्य राक्षसेन्द्रः पुनः पुनः ।
काममन्युपरीतात्मा जानकीं पर्यतर्जयत् ॥ ३६
उपगम्य ततः क्षिप्रं राक्षसी धान्यमालिनी ।
परिष्वज्य दशग्रीवमिदं वचनमब्रवीत् ॥ ३७
मया क्रीड महाराज सीतया किं तवानया ।
अकामां कामयानस्य शरीरमुपतप्यते ।
इच्छन्तीं कामयानस्य प्रीतिर्भवति शोभना ॥ ३८

33 D1 2 4 om (hapl except D2) 33[ab] (for D2 cf v l 32) —[a]) Ñ1 दीर्घं (for मात्र) —[b]) D10 कृशोदरीं, T2 शिरो° (for कुचो°) —[c]) D2 मात्रा च, D6 M2 मात्रसु, M1 मात्रादि (for मात्राश्य) D14 नेत्राश्र —[d]) D2 नेत्रा (for जिह्वाम्) Ś1 D2 10 खरानना, G2 मजिह्वका (for अजिह्विकाम्) Ñ2 D3 6 7-9 11 T2 G1 M1 2 दीर्घजिह्वा (D3 7 9 °ह्व) नखामपि (Ñ1 D3 11 °नना) D1 4 दीर्घं जिह्वानयानना (D2 °खा+ +) —[ef]) Ñ1 D10 सनासिका (for °सिका) Ñ1 व्याघ्र (for सिंह) Ñ2 D2 3 सूकरानना, D7 9 शूकरी° (for सूकरीमुखीम्) Ś1 D10 समुखीं सूकरानना, D11 व्याघ्रशूकरमानना (with hiatus) (for [f]) D1 4 मातस्रास्या सिंहमुखीगोमुखी शूकरानना —After 33, Ñ1 D3 10 11 ins while D1 4 ins l 2 only after 33

523* द्वयोरुत्कवक्त्रायाश्च राक्षसीर्घोरदर्शना ।
खड्गमुद्गरशूलानि शोणिताक्तानि बिभ्रती ।

[(l 1) Ñ1 क्रूरकर्माण (for घोरदर्शना) D3 11 सुरामांस वसाप्रिया (for the post half) —(l 2) Ñ1 मुद्गरखड्ग (by transp) D10 शोभमानानि (for शोणिताक्तानि) ]
—Thereafter Ñ1 D1 2 4 cont l 2 only D3 10 cont l 1 6 and 2 D11 cont l 1 and 6 while Ñ2 V B D6 subst for 31-33

524* नानाप्रहरणा घोरा नानारूपसमन्विता ।
मांसशोणितदिग्धाङ्गी मेदोदिग्धकरानना ।
सनादिता मांसतुष्टा सदा मांसवसाप्रिया ।
नानारूपसमुत्थाना नानावेषधरा सदा ।
खड्गमुद्गरनिस्त्रिंशशक्तिप्रासपरश्वधा । [5]
विचित्रमाल्याभरणा रक्तमाल्यानुलेपना ।

[(l 1) D3 10 11 प्रहरणोपेता (for °णा घोरा) and गुणान्विता (for -समन्विता) —(l 2) D1 दिग्धास्यो (for °ग्धाङ्गी) D6 मेधा- (sic) (for मेदो) —V1 illeg from l 3 up to 41 —(l 3) V2 सनासिका, D6 सनासिनी (for सनादिता). V2 -[मां]सा (for -तुष्टा) —(l 4) B2 3 -समुत्थाना (for समुत्थाना) B1 रूप (for वेष) Ñ2 V2 B2 D6 सदा (for सदा) —(l 5) B3 4 अग्नि- (for शक्ति) V2 B2 D6 -परशु (for प्रास).—(l 6) B3 रत्नमाल्य (for °माल्य) ]

34 V1 illeg for 34 (cf v l 524*) —[a]) D2 मम वशा, D3 11 मे वशगा (for मद्वशगा) —[b]) G1 भवतु (for °ति) —[d]) Ñ1 D2 क्षिप्र सर्वा (by transp), D1 G3 2 सर्वे क्षिप्र (for सर्वाः क्षिप्र) Ñ1 D7 9 वा (for च) Ñ2 V2 B D6 नि शक्य मम शासनात्

35 V1 illeg for 35 (cf v l 524*) —[ab]) D2 [अ]नुलोमाभ्या (for °लोमैश्च) D1 reads in marg [b]. Ś1 D1-4 10 -विभेदनैः (for -[आ]दिभे°) D11 सामदान विभेदितैः (for [b]) Ñ2 V2 B2-4 D6 सामदानवि (V2 °नादि) भेदैश्च प्रतिलोमानुलोमत (V2 B3 °मि, B4 °कै) B1 साम दानादिमिश्चैव प्रतिलोमविलोमभि —[c]) Ñ1 प्रावर्तयत, B1 सत्रासयत, D1 4 5 7 9 11 T1 2 G1 M2 C3 आवर्जयत (for आवर्तयत) —[d]) D1 3 4 11 [उ]द्यमनैरपि (for °नेन च) Ś1 D10 निर्बन्धाद्यम (Ś1 [before corr ] °श ]नैरपि, Ñ2 V2 B1-3 D6 वा (B1 च) हुडुदोष (Ñ2 V2 B1 °दैर्दे) मैरपि

36 V1 illeg for 36 (cf v l 524*) —[a]) D11 सीता (for प्रति) —[b]) Ñ2 V2 B D6 राक्षसी (V2 B1 °सीं) राक्षसेश्वर —[c]) Ś1 D10 कोप (for काम) —[d]) B1 समतर्जयत्, D6 T2 M2 पर्यगर्जत, D7 9 Ct प्रतिगर्जत, G2 पर्यसर्पयत्, M1 परि°, M3 पर्यवर्जयत् (for पर्यतर्जयत्) Ś1 D10 गर्जन्गर्जन्स जानकीं, Ñ1 D2 11 पर्यगर्जत् (D1 °र्ज)स जानकीं, D1-4 पर्यतर्जत् (D1 °भार्त्से,)स जानकीं ‡‡ Ct प्रतिगर्जेत प्रत्यगर्जत् ‡‡.

37 V1 illeg for 37 (cf v l. 524*) —[a]) Ś1 D10 उपागम्य (for उपगम्य) Ś1 D10 शीघ्रं, Ñ V2 B D1-4 6 11 तूर्णं (for क्षिप्रं) —[b]) Ś1 D10 वाक्यशालिनी D1 ध्यान°, D2 3 धन° D11 वन्य° (for धान्यमालिनी) Ñ2 V2 B D6 प्रिया मंदोदरी तदा (Ñ2 B2 [marg also] °या)

38 V1 illeg for 38 (cf v l 524*) —[a]) D11 रम (for क्रीड). T2 महाभाग (for °राज) —[b]) G2 सीतायाँ (sic) (for सीतया). Ś1 Ñ2 V2 B1 2 D2 M3 करिष्यसि Ñ1 B1 3 D1-4 8 11 करिष्यसि (for तवानया) —D2 G1 M1 om 38[cdef] —[c]) B1 2 D6 काममानस्य —[d]) Ñ2 V2 B D6 परिपीड्यते D1 कोप° (for उपतप्यते) —Ś1 D10 om 38[ef]. —[e]) Ñ1 सकामां, B1 D1 2 4 6-9 इच्छतीं (for इच्छन्तीं) D1 2 4 काममानस्य (for °यानस्य) —[f]) Ñ1 B D6 रतिर् (for प्रीतिर्) G1 भवतु (for °ति) —After 38, Ñ V2 B D1-4 6 ins , while D11 subst for 38[ef].

एवमुक्तस्तु राक्षस्या समुत्क्षिप्तस्ततो बली ।
ज्वलद्भास्करवर्णाभं प्रविवेश निवेशनम् ॥ ३९
देवगन्धर्वकन्याश्च नागकन्याश्च तास्ततः ।
परिवार्य दशग्रीवं विविशुस्तद्गृहोत्तमम् ॥ ४०

स मैथिलीं धर्मपरामवस्थितां
प्रवेपमानां परिभर्त्स्य रावणः ।
विहाय सीतां मदनेन मोहितः
स्वमेव वेश्म प्रविवेश भास्वरम् ॥ ४१

G 5 24 0
B 5 22 40
L 5 17 40

इति श्रीरामायणे सुन्दरकाण्डे विंशः सर्गः ॥ २० ॥

525* प्रीतिमाहुस्तु विद्वांस कामस्य परमुत्तमम् ।

[ V2 प्रीतमाहि (sic) (for °माहुः) Ñ B2 D1 च D1 2 हु (for तु) ]

—D1 3 4 cont , D5 7 8 S ins after 38ab

526* विवर्णया कृपणया मानुष्या राक्षसेश्वर ।
नूनमस्या महाराज न दद्या भोगमुत्तमान् ।

[ (l 1) D2 विवर्णया D3 4 [अ]मानुष्या (for राक्षसेश्वर) ⊛ Cm अकृपणयेति छेदः । अकृपणया पतिव्रतया सीतया किं करिष्यसि । अमानुष्येति छेदः । अमानुष्या अत एव निवर्णा मनुष्यभोगविलक्षणा । उत्तमवर्णयेत्यर्थः ⊛ —After l 1 D1 3 4 ins

526 (A)* कल्याणीकनया रामहीनया किं करिष्यसि ।

—(l 2) D3 6 7 9 T1 M1 अस्यां (for अस्या) D1 3 4 G1 महाबाहो (for °राज) D5 तादिव्यान् M1 Cg न दिव्यान् (for न दद्या) D1 3 4 पूर्णान् (for उत्तमान्) ]

—D1 3 4 further cont

527* विद्युर्येन दौर्भाग्याद्धं त्वामिच्छति जानकी ।
देवगन्धर्वकन्याश्च यक्षराक्षसकन्यका ।
कन्याश्चैव महाबाहो पौरुषेण त्वयार्जिता ।
तामिः क्रीड महाराज जहीमामन्यचेतसम् ।

[ (l 2) Prior half = 40a —(l 3) D1 [च]व (for [ए]व) —(l 4) D4 महाबाहो (for °राज) ]

—After 526*, D5 7-9 S cont

528* विद्धयस्मरश्रेष्ठास्त्व बाहुवशार्जितान् ।

[ M1 श्रेष्ठान् , Ck t as above (for श्रेष्ठाः) Cg विद्धयस्मरश्रेष्ठान् (for the prior half) G1 वशार्जिताः (for °र्जितान्) ]

39 V1 illeg for 39 (cf v l 524*) —a) T3 उक्ते (for उक्तः) Ś1 Ñ2 D2 10 11 तया राज्ञः, Ñ3 V3 B D4 6 दशग्रीव , D1 4 स राक्षस्या (for तु राक्षस्या) —b) D1 M1 समुत्क्षिप्य, Ct as in text (for °क्षप्तः) Ś1 Ñ1 D2 10 11 स्मित कृत्वा दशानन , Ñ2 V2 B D4 6 प्रियया मोहितः (D2 °तक)या D3 4 समाश्लिष्टो महाबल —After 39ab, D1 2 5 7 9 S ins

529* महाघनमेघसंकाशो राक्षस स व्यवर्तत ।
प्रस्थित स दशग्रीव कम्पयन्निव मेदिनीम् ।

[ (l 1) G1 महस्य Ck t as above (for महाघन°) D1 3 4 स प्रवर्तत D1 3 राक्षसीभिः प्रवर्तत (for the post half) ]

—D1 om 39cd —c) Ś1 Ñ V2 B D2 3 4 10 11 दिवाकरवर (Ñ1 °हारक) (for ज्वलद्भास्कर ) D7 9 प्रकाश (for -वर्णाभं) —D8 om (hapl ?) 39d–40c —d) Ś1 ततो गृह, Ñ1 गृह स्वक Ñ2 V2 B D2 3 10 11 गृह सत (B1 तथा), D1 गृहोत्तम (for निवेशनम्)

40 V1 illeg for 40 (cf v l 524*) D1 om 40abc (cf v l 39) —After 40a, D6 ins

530* यक्षराक्षसकन्यका ।
तथा च दानवकन्याश्च

[ (l 1) = Post half of l 2 of 527* ]

—b) Ś1 महद्वस , Ñ1 तथैव च Ñ2 च तास्तथा, V2 B1-3 D2 च तास्तदा, B4 च त तदा, D1 3 4 10 11 च सर्वश , D5 च तास्त्रिय , T1 3 G1 M3 च सर्वत , T2 ततस्तत (for च तास्तत ) —Ñ1 illeg for 40d —d) D5 6 T1 M2 विविशुस्ता, D7 9 M1 प्रविशुस्ता G2 °शुस्त (for विविशुस्तद्) Ś1 D1-4 10 11 वि(Ś1 प्र)विशुर्भवनोत्तम, Ñ2 V3 B D4 प्राविशन्गृहमुत्तम ⊛ Ct प्रविशु प्रविविशु ⊛

41 V1 illeg for 40 (cf v l 524*) —a) B4 लोकपरम्, D1 3 धर्मपथे (for धर्मपराम्) D2 4 व्यवस्थिता, (for अव°) —D11 om 41b —b) D1 प्रवेशमाना (for प्रवेप°) V3 B1-3 परितर्ज्य, D2 प्रविभत्स्यं D4 परिरभ्य (corrupt) (for परिभर्त्स्य ) Ś1 Ñ1 B4 D1-4 10 तु निवेर ]

# २१

G. 5 75 9 B. 5 23 1 L. 5 18 1 इत्युक्ता मैथिलीं राजा रावणः शत्रुरावणः ।
संदिश्य च ततः सर्वा राक्षसीर्निर्जगाम ह ॥ १
निष्क्रान्ते राक्षसेन्द्रे तु पुनरन्तःपुरं गते ।
राक्षस्यो भीमरूपास्ताः सीतां समभिदुद्रुवुः ॥ २
ततः सीतामुपागम्य राक्षस्यः क्रोधमूर्छिताः ।
परं परुषया वाचा वैदेहीमिदमब्रुवन् ॥ ३
पौलस्त्यस्य वरिष्ठस्य रावणस्य महात्मनः ।
दशग्रीवस्य भार्यात्वं सीते न बहु मन्यसे ॥ ४
ततस्त्वेकजटा नाम राक्षसी वाक्यमब्रवीत् ।
आमन्त्र्य क्रोधताम्राक्षी सीतां करतलोदरीम् ॥ ५
प्रजापतीनां षण्णां तु चतुर्थो यः प्रजापतिः ।
मानसो ब्रह्मणः पुत्रः पुलस्त्य इति विश्रुतः ॥ ६
पुलस्त्यस्य तु तेजस्वी महर्षिर्मानसः सुतः ।
नाम्ना स विश्रवा नाम प्रजापतिसमप्रभः ॥ ७
तस्य पुत्रो विशालाक्षि रावणः शत्रुरावणः ।
तस्य त्वं राक्षसेन्द्रस्य भार्या भवितुमर्हसि ।
मयोक्तं चारुसर्वाङ्गि वाक्यं किं नानुमन्यसे ॥ ८

---

(for रावण) —[c]) D8 दुःखित (for मोहित) —[d]) B2 तद्व, B3 स्वकीय (for स्वमेव) Ś1 Ñ B3 D1.4.7-11 G2 M1.2 रावण, V2 B1.2.4 D5.6 दुर्मना, G1 वीर्यवान् (for भास्वान्)

Colophon —*Sarga name* Ś1 D10 सीतारावणसंवाद, Ñ1 D11 राक्षसीसमादेश, Ñ2 B1 D1 रावणगर्जन, V B3.4 रावणतर्जन B2 रावणगर्हा D1.4 सीतासंतर्जन, D2 रावणराक्षसीसमादेश, D3 राक्षसीसमादेश —*Sarga no* (figures words or both) Ñ1 D1.4.10.11 om Ñ2 V2 B1.4 D5.6 24 V3 15 B2 23 B3 D5.7.8 T G M1.2 22 M3 19 —After colophon, D2 concludes with राम। G श्रीरामाय नम

## 21

M3 begins with श्रीरामाय नम

1 [a]) Ñ1 D3 राक्षसेश्वर, Ñ2 V B2.3.4 D6 लोक°, B1 °कर्षण (for शत्रुरावण) —[c]) G2 तु (for च) D2 समादिश्य (for संदिश्य च) V B1.4 ततः D3.5.6.8 तथा (for ततः) —[d]) B1 D1.4 स, G2 हा (for ह) —After 1, D1.4 ins

531* प्रविवेश गृहं रम्यं राक्षसेन्द्रो महाबल ।
संदिश्य त्रिजटा चैव राक्षसीश्च महत्तमाम् ॥

[(l 2) D4 ब्रतुत्तमां (for महत्तमाम्)]

2 [a]) Ñ1 D1-4 निःक्रान्ते, Ñ2 V2 B1.2.4 D6 निर्गं(B3 °या)ते (for निष्क्रान्ते) —[b]) Ś1 D10 रावणे शत्रुरावणे —[c]) D1 राक्षसेन्द्रे (sic) (for राक्षस्यो) B1 विकराला, T3 रूपाला (for रूपास्ताः) —[d]) D4 समभिदुद्रुवन् (sic) V1 सीतां दुद्रुविरे (corrupt)

3 ☞ V3 B1 om from 3 up to colophon —[a]) Ś1 Ñ1 V1 B2.4 D1.2.4.5.6.10.11 ततस्तां समु(V1 °स्तास्तामु)पागम्य, Ñ1 विकृत समुपागम्य, B3 तत प्रहस्य ता सीता D2 ततस्ता समुपागम्य —[b]) B4 विकृतानना (for क्रोधमूर्छिता) —Ñ1 illeg for ° —[c]) Ñ2 B3 D6 पुन (for परं) —[d]) D8 राक्षस्य, G2 मैथिलीम् (for वैदेहीम्) Ś1 D10.11 अब्रवीत् (sic)

4 V2 B1 om 4 (cf v l 3) —[a]) Ś1 Ñ V1 B3-4 D1-4.6.10.11 पौलस्त्यानां (for °स्त्यस्य) B4 परिष्वज्य (sic) (for वरिष्ठस्य) —[d]) D11 मन्यते

5 V2 B1 om 5 (cf v l 3) Ñ2 B2 D6 om from 5 up to colophon —[a]) D11 त्रिजटा (for [त्व्]एकजटा) B3 नाम्ना —[b]) T1.2 G2 वाचम् (for वाक्यम्) —Ñ1 illeg for ° —[cd]) D2 आक्रम्य Ś1 D1.4.11 क्रुद्ध, D2 क्रुष्ट, D11 क्रूद्ध (sic) (for क्रोध) Ś1 D10 G2 ताम्राक्षीं V1 B3 अमर्षपुष्टताम्राक्षी (for °) D2 ता वामलोचनां (for करतलोदरीम्) B4 आयताक्षी शुभा सीता रामस्य प्रियकामिनीं —After 5 D2 reads 7[ab] in marg

6 Ñ2 V2 B1.2 D6 om 6 (cf v l 3 and 5) —[a]) G1 M2 च (for तु) B4 चतुर्णां (for षण्णां तु) Ñ1 षण्णां य प्रजापतीनां —[b]) D3.5.7.8 T1.2 [ऽ]य (for यः) —D2 reads 6[a]–7 in marg —[c]) D4 मनसो (for मा°) —[d]) D11 पौलस्त्य (sic)

7 Ñ2 V2 B1.2 D6 om 7 (cf v l 3 and 5) D2 reads 7 in marg (cf v l 6) D2 reads (m) 7[ab] after 5 —[a]) D1.4 च (for तु) T1.2 G2 स पुलस्त्यस्तु (T2 °स्य) (for पुलस्त्यस्य तु) —[b]) B2.4 D1.4.5.8 T G1 महर्षेः B4 D10 स्मृत (for सुतः) —[c]) Ś1 Ñ1 B3 D1.4.10.11 तु B3 om, D2 च (for स) —[d]) Ś1 Ñ1 V1 B3 D4.10 -सम प्रभु, B4 D1.3.11 °प्रभु (for -समप्रभः)

8 Ñ2 V2 B1.2 D6 om 8 (cf v l 3 and 5) —[a]) B4 D1 विशालाक्षो, D1.2.3 G1.2 M3 °लाक्षी (sic). —After 8[ab], Ś1 Ñ1 V1 B3.4 D1-4.10.11 ins

यत्राहमाभिः क्रूराभी राक्षसीभिरिहार्दिता ।
जीवामि हीना रामेण मुहूर्तमपि दुःखिता ॥ १३
एषाल्पपुण्या कृपणा विनशिष्याम्यनाथवत् ।
समुद्रमध्ये नौः पूर्णा वायुवेगैरिवाहता ॥ १४
भर्तारं तमपश्यन्ती राक्षसीवशमागता ।
सीदामि खलु शोकेन कूलं तोयहतं यथा ॥ १५
तं पद्मदलपत्राक्षं सिंहविक्रान्तगामिनम् ।
धन्याः पश्यन्ति मे नाथं कृतज्ञं प्रियवादिनम् ॥ १६

सर्वथा तेन हीनाया रामेण विदितात्मना ।
तीक्ष्णं विषमिवास्वाद्य दुर्लभं मम जीवितम् ॥ १७
कीदृशं तु मया पापं पुरा देहान्तरे कृतम् ।
येनेदं प्राप्यते दुःखं मया घोरं सुदारुणम् ॥ १८
जीवितं त्यक्तुमिच्छामि शोकेन महता वृता ।
राक्षसीभिश्च रक्षन्त्या रामो नासाद्यते मया ॥ १९
धिगस्तु खलु मानुष्यं धिगस्तु परवश्यताम् ।
न शक्यं यत्परित्यक्तुमात्मच्छन्देन जीवितम् ॥ २० G. 5 26 18 B. 5 25 20 L. 5 20 21

इति श्रीरामायणे सुन्दरकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

13 For sequence in Ś1 Ñ V1(illeg) 3 B2-4 D1-5(repeats 13) 8 10 11 G1, cf. v l 2 B1 om 13 (cf v l 12) —ᵃ) B3 यत्रो, B4 (m also) यत्र (for यत्र) B2 D4 भक्ति-; T2 3 M2 युवं (for भासि), Ñ2 D6 क्रुद्धाभी, D1 घोराभिर् (for क्रूराभी) D3 यथाहमपि घोरा भिर्, ✻ Cm g यत्र यत।, so also Ct ✻ —ᵇ) Ñ2 V2 B2 3 D6 अभिद्रुता, D3 उपद्रुता (for इहार्दिता) D1 4 मानुषामामिरर्दिता —ᶜ) Ś1 D1-4 10 11 पतिना हीना, Ñ2 V2 B2-4 D6 पतिहीना च(B3 om [subm]), D5 (second time) यदि रामेण, D8 [अ]ह न रामेण (sic) (for हीना रामेण) Ñ1 यस्या विना * जीवामि (sic), D5 (first time) विना रामेण जीवामि —ᵈ) B2 अपि च (hypm) D2 इव (for अपि) —After 13, D5 reads 8–9

14 For sequence in Ś1 Ñ V1(illeg) 3 B2-4 D1-6 10 11 G1, cf v l 2 —ᵃ) D1 4 8 पुण्य (for पुण्या) D2 निपुणा (sic) (for कृपणा) —ᵇ) T2 दीना क्लिश्यामि (for विनशिष्यामि) Ś1 N1 D1-4 10 11 विनश्यामि यथाबला(Ś1 D10 °यथ, D1 2 °अबा) Ñ1 V2 B D6 विनश्या (V2 D6 °नंक्ष्या)मि यथासुग —Ś1 D10 om 14ᶜᵈ B2 reads 14ᶜᵈ twice —ᶜ) D11 स्वस्ता (for पूर्णा) —ᵈ) D1 वायुनगाद् D2 [आ]हते, D11 [अ]गमत् (for [आ]हता) Ñ2 V2 B D6 वायिता मारुतरिव(B1 2 °वैथा)

15 V1 illeg for 15 (cf v l 10) —ᵃ) Ś1 D1 4 10 स्तम् (for तम्) —ᵇ) N V2 B D6 पश्यन्ती राक्षसीगण(V2 °गान्, B2 °कुन्°); D1 4 राक्षसीनां यथा गता —ᶜ) D6 ननु (for खलु) B1 दुःखेन —ᵈ) Ś1 Ñ2 D1-4 10 11 कूल तोयैरिवानु(Ś1 D10 °वू, Ñ1 °*)ग

16 V1 illeg for 16 (cf v l 10) —ᵃ) B3 4 D1 2 4 6 11 रक्ताक्षं B2 -पत्राक्ष° (for पत्रा°) Ś1 D1 सुपत्र दलपाक्ष ✻ Cv g पद्मदलपत्राक्षम् । दलशीति दल त्रिकालिन पत्राणनिलय । यद्वा स्वशीलि दल गर्भपत्रम् । विकसद्दलपत्रेकार्थं दलद्वय वा ✻ —ᵇ) B2 विक्रम (for विक्रान्त) B1 सिंहविक्रमशालिन —ᶜ) Ś1 D3 10 तं राम, Ñ1 illeg Ñ2 B1 2 4 D6 काकुत्स्थ, D2 11 वै राम (for मे नाथ) B3 धन्या पश्यामि काकुत्स्थ —ᵈ) Ś1 B3 D3 10 प्रियदर्शं(D3 °र्शिं)न D1 12 सत्यवादिन

17 V1 illeg for 17 (cf v l 10) —ᵃ) M3 विष तीक्ष्णम् (by transp) V2 B1 D1-6 11 T1 [आ]माद्य —ᵈ) D11 तव (sic) (for मम) D7 9 जीवन Ñ2 V2 B1 2 4 D6 transp मम and जीवित B2 जीवित दुर्लभ मम

18 V1 illeg for 18 (cf v l 10) —ᵃ) V2 B4 हि (for तु) D4 T2 M1 2 पुरा D8-9 महा (for मया) G1 ईदृश तु पुरा पाप —ᵇ) Ś1 Ñ1 D1-4 10 11 पूर्व (D3 °वं) B3 पर, D6-9 T2 G1 M2 3 मया (for पुरा) M1 3 जन्मान्तरे —ᶜᵈ) D7 9 महा (for मया) D7-9 transp दुःख and घोर Ś1 Ñ1 D1-4 10 11 यदि(D3 येने)द प्राप्य तवस्था मया(D1 4 °हा) घोरा सुदारुणा, N2 V2 B D6 यदय प्राप्यते शोको मया घोरा च(B4 तु) यातना ✻ Ck सुदारुणमित्यनन्तरमेव श्लोक इति प्रक्षिप्त ✻ —After 18, G1 2 ins 585* (G1 alone repeating it after 5 24 7)

19 V1 illeg for 19 (cf v l 10) After 19ᵃᵇ, B3 reads 5 24 3ᶜ–5ᵇ —Ś1 D10 om 19ᶜᵈ —ᶜ) G1 3 तु (for च) Ñ1 D1-4 11 राक्षसीभिरितस्वाच ✻ Cr m g रक्षन्त्या रक्षमाणया ✻ —ᵈ) N1 D1-4 11 M3 कामो (for रामो) —For 19ᶜᵈ, Ñ2 V2 B D6 subst

580* मया नावाप्यते कामो राक्षसीभि सुरक्षिता ।

[D4 रामो (for कामो) B4 राक्षसीकृतरक्षा (for the post half)]

20 V1 illeg for 20 (cf v l 10) —ᵃ) D3 कीमतर तु (sic) (for खलु मानुष्य) —After 20ᵃᵇ, Ś1 N1 D1-4 10 11 ins

581* राक्षसीवशमापन्नं भर्त्सयमान सुदारुणम् ।

# २४

G 5 26, 29 B 5 26, 1 L 5 20 32 प्रसक्ताश्रुमुखी त्वेवं ब्रुवन्ती जनकात्मजा ।
अधोमुखमुखी बाला विलप्तुमुपचक्रमे ॥ १
उन्मत्तेव प्रमत्तेव भ्रान्तचित्तेव शोचती ।
उपावृत्ता किशोरीव विवेष्टन्ती महीतले ॥ २
राघवस्याप्रमत्तस्य रक्षसा कामरूपिणा ।
रावणेन प्रमथ्याहमानीता क्रोशती बलात् ॥ ३
राक्षसीवशमापन्ना भर्त्स्यमाना सुदारुणम् ।
चिन्तयन्ती सुदुःखार्ता नाहं जीवितुमुत्सहे ॥ ४
न हि मे जीवितेनार्थो नैवार्थैर्न च भूषणैः ।
वसन्त्या राक्षसीमध्ये विना रामं महारथम् ॥ ५

---

[ D1-4 रक्षणा याह D11 रक्षमापन्ना (for वशमापन्न) D( 4 12 भत्स्यमाना ]

—$^{c}$) Ñ2 V1 B D6 यत्र शक्य (by transp ) M3 न शक्यते (for न शक्य यत्) —$^{d}$) Ś1 Ñ1 D10 स्वच्छंदेनाहम, B2 कामनैव तु, T2 3 G3 मम छंदेन Cg k t as in text (for कामच्छन्देन) —After 20 Ś1 Ñ1 B1 4 D3 6 10 11 ins

582* यस्मादपारेदुं सीमां प्राप्ता नयति नान्तक ।

[ B1 D6 अपारे दु में मां B1 नांतिक (sic) (for नान्तक ) ]

Colophon Ś1 Ñ V1 B D1 3 4 10 11 om (cont. the Sarga) —*Sarga name* D3 4 सीताविलाप —*Sarga no* (figures words or both) D3 4 om, D3 1-4 T G M1 3 25 M2 24 —After colophon, G concludes with श्रीरामाय नम

## 24

Ś1 Ñ V1 B D1 3 4 10 11 cont the previous Sarga M2 begins with श्रीरामाय नम

1 V1 illeg up to 12 (cf v l 5 23 20) —$^{a}$) D1 प्ररिक्ताश्रु, D8 10 T1 प्रसृताश्रु, D11 प्रशक्ताश्रु (sic) Cm g k t as in text (for प्रसक्ताश्रु ). Ñ1 V2 B1 D1 3 4 7 8 T2 3 M2 त्वेवं B2 होव ( for [ इ ]त्येव ) —B1 om from जन in 1$^{b}$ up to स्वाद् in 586* —$^{b}$) Ś1 B2 D2 3 10 रुदती, Ñ V1 B1 3 4 D2 7 8 T Ct ब्रुवती, D1 ब्रुवंती, Cm k as in text (for ब्रुवन्ती), —$^{c}$) B4 D2 4 अधोम(B4 °न)ख (for °मुख ) Ñ1 दीना, D4 दीना (for बाला) —$^{d}$) M1 प्रलप्तुम्, Cm k t as in text Ñ1 V2 B2-4 D4 विल्लाप सुदु खिता ✻ Cm k t विलप्तुं विल पितुम् ✻ —For 1$^{cd}$ Ś1 Ñ1 D1-4 10 11 subst, while B4 ins after 1

583* अधोमुखी विलपितु वाक्य समुपचक्रमे ।

—After 1, B4 ins

584* हा राम हा ✻ सौमित्रे उवाच च पुन पुन ।

2 V1 illeg for 2 B1 om 2 (for both, cf. v l 1) —$^{a}$) Ś1 D11 रुदती च(D10 °तीव) (for उन्मत्तेव) D1 reads प्रमत्तेव in marg. —$^{b}$) Ś1 D1-4 10 11 भामिनी Ñ1 मानवी, Ñ2 V2 B2-4 D6 चातुरा, Ck t as in text (for शोचती) ✻ Ck t शोचती शोचन्ती ✻ —$^{c}$) B1 D1 5 7 8 T2 उपावृत्त, G1 उपविष्टा, Cr m g k t as in text (for उपावृत्ता) D1 च (for [ इ ]व) D11 कुमारी च (for किशोरीव) —Ñ1 illeg for 2$^{d}$–3$^{a}$ —$^{d}$) Ś1 B1 D3 11 च्य(Ś1 वि)चेष्टत, Ñ2 V1 B2 4 D2 6 चेष्टमाना, D1 4 7-8 विचेष्टती, D10 विचेष्टत (for विवेष्टन्ती)

3 V1 illeg for 3 B1 om 3 (for both cf v l 1) Ñ1 illeg for 3$^{a}$ (cf v l 2) —$^{a}$) Ś1 Ñ2 B1 D1 3 4 6-10 M2 3 Cm g t प्रमत्तस्य, V2 B3 प्रशक्तस्य, D6 D8 G2 [ अ ]प्रमेयस्य, Cr as in text (for [ अ ]प्रमत्तस्य) ✻ Cr अप्रमेयस्येति पाठ सम्यक् ✻ —B3 reads 3$^{c}$–5$^{b}$ after 5 23 19$^{ab}$. —$^{c}$) D( प्रविश्य (for प्रमथ्य) —$^{d}$) Ñ2 V2 B2-4 D6 रुदती (for क्रोशती ) Ś1 Ñ1 D1-4 10 11 मोहात्यपहृता बलात्

4 V1 illeg for 4 B1 om 4 (for both cf v l 1) For sequence in B3 cf v l 3. Ś1 om. 4–5$^{b}$ —$^{b}$) Ñ V2 D4 7 8 T2 च दारुणे( V2 °णं), D2 4 पुन पुन, D6 °णा D10 सु ✻ हते (for सुदारुणम्) —D10 om 4$^{c}$–5$^{b}$ —$^{c}$) Ñ1 D1-4 11 G1 विचिंतयंती( Ñ1 D2 11 °यामि) (for चिन्तयन्ती सु ) —$^{d}$) Ñ V2 B2 4 D1-4 6 11 नाह( Ñ2 V2 B2 3 D6 न हि ) शक्या( B3 4 °क्ते )मि जीवितु

5 V1 illeg for 5 B1 om 5 (for both cf v l 1) For sequence in B3 cf v l 3 Ś1 D10 om 5$^{cd}$ (cf v l 4) —$^{a}$) M1 च (for हि ) M2 जीवितेनार्थो —Ñ1 illeg for $^{b}$ —$^{b}$) V2 B3 4 [ अ ]पि, D6 वा T1 G1 च (for [ ए ]व) V2 B2 नाप्यर्थैन, D6 नाप्यर्थैः Cg नैवार्थैर्न (as in text) B2 D1-4 पि, B3 [ अ ]पि D11 [ ए ]व (for च) —$^{c}$) Ś1 B2 D10 वसती V2 B2 3 D1-4 6 10 11 राक्षसी ( for राक्षसी ) —$^{d}$) Ñ2 V2 B2 4 D6 T2 3 G1 महाबले, B2 सुदु खिता (for महारथम्) —After 5 D1-4 T G2 M1 3 ins while G1 3 ins after 5 23 18( G1 repeating it after 5 24 7 )

585* अश्ममारमिदं नूनमथवाप्यजरामरम् ।
हृदयं मम येनेदं न दु खेन विशीर्यते ।

(( L 1) G1(first time) • अश्ममारमदं —(L 2) M1

धिङ्मामनार्यामसतीं याहं तेन विना कृता ।
मुहूर्तमपि रक्षामि जीवितं पापजीविता ॥ ६
का च मे जीविते श्रद्धा सुखे वा तं प्रियं विना ।
भर्तारं सागरान्ताया वसुधायाः प्रियंवदम् ॥ ७
भिद्यतां भक्ष्यतां वापि शरीरं विसृजाम्यहम् ।
न चाप्यहं चिरं दुःखं सहेयं प्रियवर्जिता ॥ ८
चरणेनापि सव्येन न स्पृशेयं निशाचरम् ।
रावणं किं पुनरहं कामयेयं विगर्हितम् ॥ ९

प्रत्याख्यातं न जानाति नात्मानं नात्मनः कुलम् ।
यो नृशंसस्वभावेन मां प्रार्थयितुमिच्छति ॥ १०
छिन्ना भिन्ना विभक्ता वा दीप्ते वाग्नौ प्रदीपिता ।
रावणं नोपतिष्ठेयं किं प्रलापेन वश्चिरम् ॥ ११
ख्यातः प्राज्ञः कृतज्ञश्च सानुक्रोशश्च राघवः ।
सद्वृत्तो निरनुक्रोशः शङ्के मद्भाग्यसंक्षयात् ॥ १२
राक्षसानां जनस्थाने सहस्राणि चतुर्दश ।
येनैकेन निरस्तानि स मां किं नाभिपद्यते ॥ १३

G 5 26 32
B 5 26 12
L 5 20 31

ब ममैवेन (for मम यने°) G1 (first time) ः दु ग्ग न (by transp) T2 M3 [अ]शक्रियो ]

6 V1 illeg for 6 B1 om 6 (for both, cf v l 1) —a) B3 अनाथाम् —b) B4 तेनाहं (by transp) —c) Ñ2 V2 B2-4 D5 7 8 11 M1 Ct जीवामि, D4 तिष्ठामि (for रक्षामि) Ś1 Ñ1 D1-3 10 यन्मु (D1 3 न मु [sic], D2 सुमु) हूतमपीच्छामि —d) Ñ2 V2 B2 4 D6 जीवती, D3 4 10 11 जीविष्ठुं (for जीविता) Ś1 B1 D5 7 8 10 -जीविका, Ñ2 B3 4 D1 जीविका, D7 जीवित, G1 वनिता, Ck as in text (for जीविता) ※ Ck पापजीवितेत्यनन्तरं "चरणेनापीत्यादि"। अत्र च मध्ये द्वौ श्लोकौ प्रक्षिप्तौ॥, so also Ct ※

7 V1 illeg for 7 B1 om 7 (for both cf v l 1) D1 7 8 T2 M3 om 7-8 —a) Ñ2 D6 वा (for च) V3 वा (for मे) Ñ1 D2-4 11 नास्ति मे B3 का रामे, B4 का मेऽस्ति, Ct as in text (for का च मे) B2 वाञ्छा (for श्रद्धा) Ś1 D10 जीविते नास्ति मे श्रद्धा —b) V3 रति (for वा स) Ś1 D1-4 10 11 विना प्रिय (by transp) Ñ1 विना पति —After 7 G1 repeats 582*

8 V1 illeg for 8 (cf v l 1) B1 D5 7 8 T2 M3 om, 8 (cf v l 1 and 7) —a) Ś1 Ñ2 V2 B2-4 D1-4 6 10 11 च्छिद्यतां (for भिद्यतां) Ñ1 छिद्यतां (for भक्ष्यतां) Ñ2 V3 B2 4 D6 वा तो, G1 मेद्य (for वापि) —c) Ś1 दारुणं नेदृश दुःखं, Ñ2 V2 B3-4 D6 न चेद् (Ñ2 D6 चाहं, V2 चेत्) सुमहद् दुःखं D1 3 4 मा चिरं विविधं दुःखं, D2 11 अचिराद्विविधं दुःखं D10 दारुणमीदृशं दुःखं —d) D1 प्रियवर्जित

9 V1 illeg for 9 B1 om 9 (for both cf v l 1) —a) D1 T2 G1 [अ]प (for [अ]पि) Ñ2 V2 D6 वामेन, Ct as in text (for सव्येन) —b) B2 D1 स्पृशेयं न (by transp) Ñ2 V2 B2-4 D6 कदाचन (for निशाचरम्) —c) G2 तं (for किं) Ñ1 V2 B2-4 D1-4 6 11 नीचं (for अहं) Ś1 D10 किं पुना रावणं नीच —d) Ś1 कामयेय Ñ2 V2 B2-4 D6 पृथग्जन, D7 8 निशाचरं (for विगर्हितम्)

10 V1 illeg for 10 B1 om 10 (for both cf v l 1) Ñ2 om 10ab —a) Ś1 Ñ1 D1 7-11 T2 M1 Ct k t प्रत्याख्यान (Ś1 Ñ1 D10 °नो), V2 B2 4 D6 °दिष (V3 B4 °ष), Cr m g as in text (for °ख्यात) D2-4 D7 8 स, D10 वि, Cv t as in text (for न) Ś1 Ñ1 D1-4 10 11 जानीते, Cv t as in text (for जानाति) —b) Ś1 D10 न'मान (with hiatus) (for ना°) —c) Ś1 Ñ1 D1-4 11 प्रभावेण (D1 °चन, D3 11 °णे मा), D10 -स्वभावत्वात् (for स्वभावेन) —d) T2 G3 मा (for मां) Ś1 Ñ1 D1 2 10 धर्षयितुम्, Ñ2 B2-4 D6 परामष्टुम्, V2 वा + स्पृष्टुम्, Ck t as in text (for प्रार्थयितुम्) D3 4 11 प्रधर्षयितुम्

11 V1 illeg for 11 (cf v l 1) —a) D7 8 प्रभिन्ना (for विभक्ता) —b) D7 8 T2 दीप्ता (for दीप्ते) Ś1 Ñ1 [ऽ]ग्नौ वा (by trasp), D1 7 8 11 चाग्नौ (for वाग्नौ) Ś1 Ñ1 D2 4 प्रवेशिता, D1 प्रवेशनात् (for प्रदीपिता) D10 प्रदीप्तेऽग्नौ प्रवेशिता ※ Cv r दीप्ते वेत्यत्र चेति पदच्छेद ※ —For 11cd, Ñ2 V2 B D6 subst

586* छिन्ना भिन्नापि वादन्ता दीप्ते वाग्नौ प्रवेशनात् ।

[B1 om up to वा° (cf v l 1) V2 B4 छिन्ना (for भिन्ना) Ñ2 B2 D6 च (for [अ]पि) Ñ2 D6 वापि V2 B2 दाहा (for दाह) V2 B3 D6 च (for वा) D6 प्रदीप्ता ] —d) Ś1 विलापेन B3 वा पर, D1 10 11 वा चिर T2 निश्चय (sic) Ct as in text (for वश्चिरम्)

12 V1 illeg for 12 (cf v l 1) —a) D2 10 प्रज्ञ (for प्राज्ञ) D3 11 ज्ञानमय Ñ2 V2 B D6 कुलीनश् T2 स (for च) —b) D6 [ऽ]थ, T2 स (for च) —c) Ś1 D1 10 सन्नत Ñ2 B3 4 D3 6 8 11 T1 2 G3 M2 Ck सवृत्तो, B2 चरितो, D8 G2 M1 सुवृत्तो Cg as in text (for सद्वृत्तो) —d) B2 om शङ्के D1 10 सद्भाग्य (for मद्भाग्य) Ñ2 D12 मच्चयात् (sic) D1 M2 सक्षये G2 सुक्षयात्, Cr m g k t as in text

13 a) B1 सहस्राणां T1 2 G2 M3 सहस्राणि जनस्थाने (by transp) —c) D2-9 T2 एकेनैव (for येनैकेन)

G 5 26 0
B 5 26 13
L 5 20 0

निरुद्धा रावणेनाहमल्पवीर्येण रक्षसा ।
समर्थः खलु मे भर्ता रावणं हन्तुमाहवे ॥ १४
विराधो दण्डकारण्ये येन राक्षसपुंगवः ।
रणे रामेण निहतः स मां किं नाभिपद्यते ॥ १५
कामं मध्ये समुद्रस्य लङ्केयं दुष्प्रधर्षणा ।
न तु राघवबाणानां गतिरोधी ह विद्यते ॥ १६
किं नु तत्कारणं येन रामो दृढपराक्रमः ।
रक्षसापहृतां भार्यामिष्टां नाभ्यवपद्यते ॥ १७

इहस्थां मां न जानीते शङ्के लक्ष्मणपूर्वजः ।
जानन्नपि हि तेजस्वी धर्षणां मर्षयिष्यति ॥ १८
हृतेति योऽधिगत्वा मां राघवाय निवेदयेत् ।
गृध्रराजोऽपि स रणे रावणेन निपातितः ॥ १९
कृतं कर्म महत्तेन मां तदाभ्यवपद्यता ।
तिष्ठता रावणद्वंद्वे वृद्धेनापि जटायुषा ॥ २०
यदि मामिह जानीयाद्वर्तमानां स राघवः ।
अद्य बाणैरभिक्रुद्धः कुर्याल्लोकमराक्षसम् ॥ २१

—d) Ś1 Ñ V B D1-4 8 10 11 Ck स मा(D6 मा) नाभ्युप (Ś1 Ñ2 D1-4 10 Ch °भ्यव)पद्यते ॐ Ck अत पर काम मध्य इत्यादि। अत्र च मध्ये द्वौ श्लोकौ प्रक्षिप्तौ क्वचित्।, Ct एतदुत्तर काम मध्य इति। मध्ये, निरुद्धा रावणेन, समर्थं खलु मे, विराधो दण्डकारण्ये, रणे रामेण इति श्लोकौ प्रक्षिप्ताविति कतक ॐ

14 G2 om (hapl) 14-15 Ñ2 V B D1 2 6 om 14 —a) Ś1 Ñ1 D10 11 [इ]ह Ck as in text (for [अ]हम्) —b) Ś1 Ñ1 D10 स्वल्प, D11 स्वेन, Ck as in text (for अल्प) Ś1 Ñ1 D3 4 10 11 वीर्यवान्(D3 4 °त), Ck as in text (for रक्षसा) —c) Ś1 Ñ1 D10 11 कथ नु, Ck as in text (for समर्थ) Ś1 Ñ1 D10 11 मा (for मे) —Ñ illeg for d —d) Ś1 D3 4 10 11 रामो नाभ्यव (D12 °भ्युप)पद्यते(Ś1 °वर्तते)

15 G3 om 15 (cf 5 1 14) Ñ2 V B D6 read 15 after 18 —a) D6 8 विरोधो (sic) Ck as in text —c) Ś1 Ñ V B D1-6 8 10 11 शरैर्येनैव, Ck as in text (for रणे रामेण) —d) Ś1 N V B D1-4 6 7 8 11 T2 G1 Ck स मा(D8 मा) नाभ्यव(Ñ2 V B D6 11 °भ्युप पद्यते

16 Ñ2 V B D6 read 16 after 24ab —a) D11 यप (for काम) —b) Ñ2 V B D6 दुर्धर्षा(V1 B4 °र्षया) रक्षसा(V2 राक्षसी) पुरी —c) D4 10 नु, Ct as in text (for तु) V2 B1 4 4 राघवस्य (for राघव) —d) Ś1 Ñ1 D1-4 समाप्ता(D3 4 °प्य मुप(Ñ1 D2 °मव)धार्ये Ñ2 V B D6 समाप्य श्रुति विद्यते D3 7 9 Ct गतिरोधो भवि ष्यति(D3 हि विद्यते D9 °प्र दृश्यते) D10 अप्राप्येरुपधार्ये D11 न प्राप्येसत्रधार्ये

17 Ñ2 V B D6 om (hapl) 17 —a) D1-4 8-10 M3 कि(D2 त (sic)) नु (for किं नु) Ś1 D10 किं (sic) (for तत्) —cd) D1 भार्या गिरा (sic) G1 दृष्ट्वा म च (for भार्यामिष्टां) D3 4 यो नाभिपद्यते, D5 11 नाभ्युप पद्यत, G3 नाभ्यवपद्यत

18 a) D3 इह स्थां G3 इह * * (damaged) Cm g k t as in text (for इहस्थां मा) B2 मामि (for मां न) G1 जानाति —b) Ñ1 V B D6 नून (for शङ्के) —D6 reads from जस्वी in c up to d in marg —c) V1 B2 4 D1-4 6 11 G2 M1 2 न हि, T2 इह (for अपि) Ś1 Ñ V B D T2 G2 M1 2 स (for हि) —d) B4 न धैर्यं, D6 T2 M2 धर्षण —After 18, Ñ2 V B D6 read 15.

19 a) Ś1 Ñ1 D1 2 4 8 10 11 M2 योभि(Ś1 Ñ1 °वि, D11 °वि)गत्वा मा, Ñ2 V B1 2 4 D6 यो हि मां ग(Ñ2 D6 ज्ञा)त्वा, B2 यो मा स गत्वा च (hypm), D3 योपि मा गत्वा, D7 9 Ct मा योधिगत्य, Ck as in text (for योऽधिगत्वा मा) —b) G1 M1 न्यवेदयेत् (sic) —After 19ab, Ś1 Ñ2 D1-4 10 11 ins

587* सुमहत्तेन कल्याण कृत स्यालोकनन्दनम्।

—Thereafter Ñ2 cont

588* न त पश्यामि तदानीं सुहृद करणालयम्।

—c) Ñ1 च, D3 8 T2 G1 2 M1 हि (for ऽपि) M2 हि (for स) Ś1 Ñ1 D1 10 11 समरे Ñ2 V B D6 रणे सोपि (by transp) (for ऽपि स रणे) D1 2 4 स गृध्रराज समरे.

20 a) Ś1 Ñ1 B4 D1 4 10 11 transp कर्म and तेन —Ñ2 V B D6 transp b and c —b) D3 4 मा (for मां) M2 Cm तथा (for तदा) Ś1 D1 [अ]भ्यव(D2 [अ]भ्युप)गच्छता Ñ2 V B D2 4 11 [अ]भ्युपपद्यता, D11 स्वदराष्छता (corrupt) M1 ह्यवपद्यता ॐ Cr मा तदाभ्यव पद्यता मामुद्दिश्य निपद्यतेत्यर्थः। परस्मैपदमार्षम् ॐ —c) Ñ1 रावणे, D1 2 4 6 T1 3 रावण M1 परन (for रावण) Ñ1 D6 युद्धे D7 9 Ck t च३, Cr m g tp as in text (for द्वंद्वे) ॐ Ck 'रावणवधे' इति पाठः। रावणवधार्थमित्यर्थः।, Ct रावणवधे तिष्ठता रावणवधार्थं यतता। 'रावणद्वंद्वे' इति पाठे रावणेन सह द्वंद्वयुद्ध इत्यर्थः ॐ —d) D11 गृध्रेणापि, M1 वृद्धेन हि (for वृद्धेनापि) Ñ1 गतायुषा G3 ज* * *.

21 a) D1 2 4 G3 मति : Ch as in text (for इह) —b) D6 7 9 हि (for स) Ñ2 V B D6 तिष्ठती रावणक्षये —D6 reads 21cd in marg —c) D3 4 यथ (for अद्य) Ñ1 D10 11 G3 मति, Ñ2 V B D6 सुम : G1 M1 2 मपि

निर्मथेच्च पुरीं लङ्कां शोषयेच्च महोदधिम् ।
रावणस्य च नीचस्य कीर्तिं नाम च नाशयेत् ॥ २२
ततो निहतनाथानां राक्षसीनां गृहे गृहे ।
यथाहमेवं रुदती तथा भूयो न संशयः ।
अन्विष्य रक्षसां लङ्कां कुर्याद्रामः सलक्ष्मणः ॥ २३
न हि ताभ्यां रिपुर्दृष्टो मुहूर्तमपि जीवति ।
चिताधूमाकुलपथा गृध्रमण्डलसंकुला ।
अचिरेण तु लङ्केयं श्मशानसदृशी भवेत् ॥ २४
अचिरेणैव कालेन प्राप्स्याम्येव मनोरथम् ।
दुष्प्रस्थानोऽयमाख्याति सर्वेषां वो विपर्ययः ॥ २५
यादृशानि तु दृश्यन्ते लङ्कायामशुभानि तु ।
अचिरेणैव कालेन भविष्यति हतप्रभा ॥ २६
नूनं लङ्का हते पापे रावणे राक्षसाधिपे ।
शोषं यास्यति दुर्धर्षा प्रमदा विधवा यथा ॥ २७
पुण्योत्सवसमृद्धा च नष्टभर्त्री सराक्षसा ।
भविष्यति पुरी लङ्का नष्टभर्त्री यथाङ्गना ॥ २८ G 5 26 0, B 5 26 26, L 5 20 49

(for अभि) D8 त वाणैरपि संक्रुद्ध —d) Ñ2 V B D6 कुर्यात्कामराक्षसा (B1 °सी)

22 a) Ś1 D10 विध्वंसेच Ñ1 प्रविशेत्तु, B2 विध्वंसयेत् D8.9 निर्दहेच —b) Ñ2 D7.9 निर्दहेच् (for शोषयेच्) Ñ1 तु (for च) Ñ2 V B D6 महार्णव —c) D6 [अ]प (for च) B3 सवशस्य (for च नीचस्य) —d) Ñ2 V B D2.6 स्वकुल नाशयेत्

23 b) Ś1 D7.10 Cv राक्षसानां, D11 om (hapl ?) Cg as in text (for राक्षसीनां) —c) B2 समेव, Cr m g k t as in text (for [अ]हमेव) Ñ2 V B D1.3.4.6 रुदितैं (for रुदती) —d) T1.2 G1.2 भूयात्, Cv as in text (for भूयो) M1 भविष्यति (for न संशय) Ś1 Ñ V B D1–4.8.10.11 प्रसीतेव (Ś1 Ñ1 D10 °माते च, Ñ2 V1 D6 °भीते च) पुरी भवेत् —e/f) V B4 D2.6 मन्वेष्य (D2.6 °ष्य) T1.2 G1 मन्वीक्ष्य G3 अ * * Cv as in text (for अन्विष्य) V2 B1 G1 राक्षसीं D1.4 T1 G3 M1 राक्षसान्, Cv as in text (for रक्षसां) M1 लोकान् (for लङ्कां) Ś1 Ñ1 D10.11 विनष्टराक्षसा लङ्का (Ś1 °सांल्लोकान्) Ñ2 D6 समीक्ष्य (Ñ2 तां वीक्ष्य) भस्मसात्कृत (for °) D8 सह (hypm) (for स) B2 रामलक्ष्मणयोर्युद्धे संरंभाविर्विपोपमे ※ Cv r अन्विष्य रक्षसामित पाठ ※

24 a) Ś1 D10.11 शरैः स्पृष्टो, Ñ1 D2.6 शरैर्दृष्टो (D2.6 °र्दृष्टौ) (for रिपुर्दृष्टो) Ñ2 V B D6 न तयोर्हि शरैः स्पृ (B1 °ष्टैः)ष्टो —After 24ab, Ñ1 ins

589* दुष्टात्मासौ दुराचारो रावणो लोककण्टकः ।

—After 24cd, Ñ2 V B D6 read 16 —e) Ñ1 D11 धूमाकुल (°यासौ) (D11 चैव) —After 24e D11 ins

590* गृध्रधूमाकुला तथा ।
चिताशताकुला चैव

—d) D7.9 भविता (for भवेत्) —e) D8 [पु]व (for तु) Ś1 Ñ V B D1.4.8.10.11 पुरी लङ्का D7.9 [पु]व कालेन (for तु लङ्केयं) —D8 reads e in marg

25 a) Ś1 Ñ2 D1–4.10.11 नातिदीर्घेण (Ś1 Ñ1 न न)दीर्घेण (for अचिरेणैव) —b) Ś1 प्राप्स्यसे (sic) Ś1 B2 तन् (sic) V D2 [पु]तन् (sic), B2 [पु]त, D1.3.4.9.11 M1 [पु]न, D6 T2.3 [पु]व (for [पु]व) D11 महारथ D10 प्राप्स्यते स मनोरथ —After 25ab, B2 ins

591* भविष्यति तदा कार्यं मम वाक्यानुसारतः ।

—c) Ś1 Ñ1 D1–4.8.10.11 G1 दुष्प्र (Ś1 D10 G1 दुष्ट)स्थान (Ñ1 °नो) Ś1 D2.8.10.11 स(D8 म)माख्याति, Ñ1 D7.9 Ct [ऽ]यमाभाति D1.3.4 यथाख्याति (D1 °ति) D6 [ऽ]यमाख्यात , Cm as in text (for ऽयमाख्याति) —d) Ś1 Ñ1 D1.3.4.10 हि, D11 च (for वो) Ś1 Ñ1 D1.4.8.10.11 S Cm विपर्यय, Ct °र्यय (as in text) D2 दुष्प्रस्थान्य विपर्ययात् —For 25cd, Ñ2 V B D6 subst

592* दुष्टात्माय यथाख्याति राक्षसो वधमात्मन ।

[Ñ2 B2 D6 न नाशानि (for यथाख्याति) B2 रावणो रक्षसो भवेत् (for रक्षसो वधम्)]

26 Ñ2 V B2.4 D6 om 26–49 B1 om 25 —a) D6 T2 Ck तादृशानि, Cr m g t as in text Ś1 Ñ1 D1.4.10.11 T1.2 G2 M3 Cg [ई]दृ, M2 च (for तु) —b) Ś1 Ñ2 D1–4.10.11 M2 च, T1.2 G2 M3 वै (for तु) —c) T1.2 M3 तु (for [पु]व)

27 Ñ2 V B2.4 D6 om 27 (cf v l 26) B1 reads 27–29 in marg —a) D8 काल , D2 लोक (for लङ्का) D1 पतौ (for हते) Ś1 Ñ1 D2.4.10.11 हते लङ्कापतौ पापे (D2.6 पापे) —b) D8 रामेण (for रावण) Ś1 D10 राक्षसेश्वरे B1 D3.4 T1.2 M3 राक्षसाधमे D1 राक्षस हत —c) Ś1 D8.10 शोक N1 illeg D2.4 हानिं (for शोषं) D7.9 गच्छति (for यास्यति) D11 शोचयिष्यति D2 रूक्षा (for दुर्धर्षा) —d) D2 गृहिणी (for प्रमदा)

28 Ñ2 V B2.4 D6 om 28 (cf v l 26) B1 reads 28 in marg (cf v l 27) —a) D1 पुण्यो नव D11 मानो° (for पुण्योत्सव) Ś1 Ñ2 B1 D2.4.10.11 [ऋ]द्धि (for च) —D5 om (hapl ) 28bc —b) Ś1 B1 D3.10 तु (B1 न)ष्टस्वा स , Ñ1 दुष्टप्रम , D3.4.11 नष्ट (D11 °नि)प्रज , M1 °पत्नी स (for नष्टभर्त्री स) —c) Ś1 D10 विनश्यति, D1 विनश्यति — M3 om (hapl ) 28c–

C 5 26 42
B 5 26 27
L 5 20 0

नूनं राक्षसकन्यानां रुदन्तीनां गृहे गृहे ।
श्रोष्यामि नचिरादेव दुःखार्तानामिह ध्वनिम् ॥ २९
सान्धकारा हतद्योता हतराक्षसपुंगवा ।
भविष्यति पुरी लङ्का निर्दग्धा रामसायकैः ॥ ३०
यदि नाम स शूरो मां रामो रक्तान्तलोचनः ।
जानीयाद्वर्तमानां हि रावणस्य निवेशने ॥ ३१
अनेन तु नृशंसेन रावणेनाधमेन मे ।
समयो यस्तु निर्दिष्टस्तस्य कालोऽयमागतः ॥ ३२
अकार्यं ये न जानन्ति नैरृताः पापकारिणः ।
अधर्मात्तु महोत्पातो भविष्यति हि साम्प्रतम् ॥ ३३
नैते धर्मं विजानन्ति राक्षसाः पिशिताशनाः ।
ध्रुवं मां प्रातराशार्थे राक्षसः कल्पयिष्यति ॥ ३४
साहं कथं करिष्यामि तं विना प्रियदर्शनम् ।
रामं रक्तान्तनयनमपश्यन्ती सुदुःखिता ॥ ३५
यदि कश्चित्प्रदाता मे विषस्याद्य भवेदिह ।
क्षिप्रं वैवस्वतं देवं पश्येयं पतिना विना ॥ ३६
नाजानाज्जीवतीं रामः स मां लक्ष्मणपूर्वजः ।
जानन्तौ तौ न कुर्यातां नोर्व्यां हि मम मार्गणम् ॥ ३७

---

30 —$^{d}$) Ś1 L1 D2.3.10.11 भता (sic) D1.4 नाया (for भर्त्रा) B1 यथाबला

29 Ñ2 V B1.3 D6 M3 om 29 (cf v l 26 and 28) D1 reads 29 in marg (cf v l 27) —$^{b}$) Ś1 Ñ1 D2.7.10.11 T2 G1.3 M1 रुदतीनां —$^{c}$) D6 श्रोष्यति —$^{d}$) D10 दु खातानां (sic) Ś1 Ñ1 D1–4.10.11 महा, B1 अहं, D7.9.12 Cm p k t इव G1 अपि (for इह) ✻ Ct दु खार्तानामिव इति पाठ ✻

30 Ñ2 V B2–4 D6 om 30 (cf v l 26) M3 om 30$^{abc}$ (cf v l 28) B1 om 30–49 —$^{a}$) T2 हतोद्याना —$^{b}$) M1 गत (for हत) —For 30, Ś1 Ñ1 D1–4.10.11 subst

593* सान्धकारविघोषोत्थ हते राक्षसपुंगवे ।
भविष्यति समुन्मोक्षो मेघाना शारदीव चेत् ।

[(l 1) D11 श्वोत्थान —D2 om from l 2 to st 31 —(l 2) D1 सयानाना D4 सु वै मोक्षे (for समुन्मोक्षो) D1 शरन्मने]

31 Ñ2 V B D2.6 om 31 (cf v l 26 and 30) M3 om 31$^{cd}$ —$^{a}$) D6 राम (for नाम) —$^{b}$) D6 इह (for रामो) G1 रक्त[ान्त]*** —$^{c}$) D6 मे, D1.6 Cr m g k सो D6 Ct यत् (for हि) —D6 reads $^{d}$ in marg —$^{d}$) D1.7.9 T1 Ck t रावणस्य Cr m g as in text

32 Ñ2 V B D6 om 32 (cf v l 26 and 30) —$^{a}$) D1 च (for तु) —$^{b}$) D11 T1 M3 च (for मे) —$^{c}$) D1 यः, D2 हि (for तु) —$^{d}$) Ś1 Ñ1 D1.4.10.11 [ऽ]पि (Ñ1 D11 [ऽ]मि, D6 न)यात (for ऽयमागत) —After 32, D7.9 ins

594* स च मे विहितो मृत्युरस्मिन्दुष्टेन वर्तते ।

33 Ñ2 V B D6 om 33 (cf v l 26 and 30) D3 om 33 —$^{a}$) Ś1 अनानु (sic) (for जानन्ति) —$^{b}$) D1.3.8.11 G2 M1.2 पापचारिण, Cm g k t as in text Ś1 D10 राक्षसा पिशिताशिन —$^{c}$) D5 हेत् (for तु) T1 महोत्पाता Ś1 Ñ1 D1–4.10.11 धर्मास्ते (Ś1 Ñ1 D10 धर्मेस्ते), D6 कर्मं त (for महोत्पातो) —$^{d}$) T2 भविष्यति Cm g t as in text Ś1 D2.3.4.10.11 मा प्रति Ñ1 मा विभो (for साम्प्रतम्) ✻ Ct नगोऽस्त्वानुकर्ष इति कतक ✻

34 Ñ2 V B D6 om 34 (cf v l 26 and 30) Ś1 D2 om 34$^{ab}$ —$^{ab}$) D6 T2 Cr ते (for [न]ैत) D11 प्रजीवति (for विजानन्ति) D6 पिशिताशिन D10 नैर्‌ऋता पापकर्माण (metri causa) (for $^{b}$) D5 नैव धर्मं विजानाति राक्षस पिशिताशन —D6 repeats 34$^{c}$–35$^{b}$ after 48$^{ab}$ —$^{c}$) Ś1 Ñ1 D1.6 (both times) T1 Ck t प्रातराशार्थं (D6 $^{o}$र्थ) D1 प्रति मासाय, D10 प्रातःप्राशार्थं (sic) (for प्रातराशार्थे) —$^{d}$) Ś1 Ñ1 D2.4.10.11 योजयिष्यति (for कल्प$^{o}$) D4 क्रूर संयोजयिष्यति

35 Ñ2 V B D6 om 35 (cf v l 26 and 30) D6 repeats 34$^{c}$–35$^{b}$ after 48$^{ab}$ —$^{a}$) Ś1 Ñ1 D1.2.10.11 भविष्यामि M1 धरि$^{o}$, Ct as in text (for करि$^{o}$) —$^{b}$) Ś1 Ñ1 D1–4.10.11 वीर (for विना) D1 प्रियदर्शिन —$^{c}$) Ś1 राजीवपत्राक्षम् —$^{d}$) Ś1 D10 च (for सु)

36 Ñ2 V B D6 om 36 (cf v l 26 and 30) D2.7 om 36, D6 transp 36 and 37$^{ab}$ —$^{b}$) D6 विषस्य Ś1 D10 T1.3 G1.2 भविष्यति D6 भवेदिति (for भवेदिह) —$^{c}$) Ñ1 क्षिप्तः (sic) D10 देव (for देवं) —$^{d}$) D1 पश्येह ✻ Ct पतिनेति नामाव भार्ये ✻

37 Ñ2 V B D6 om 37 (cf v l 26 and 30) D6 transp 36 and 37$^{ab}$ —$^{a}$) M1 जानकी (for नाजानात्) Ś1 Ñ1 D1–4.10.11 न जाने हि (Ś1 Ñ1 D11 हि)मा (D2 यदा) राम ✻ Cg k t जीवतीं जीवन्तीम् ✻ —$^{b}$) Ś1 Ñ1 D2.3.10.11 वा, D2 तु D6 च (for मां) Ñ1 D1.4.11 राघव, D5.7.9 G1 M3 भारत (for लक्ष्मण) —$^{c}$) D1.4.11 G1 जीवन्तौ, Cv g k t as in text (for जानन्तौ) D1 तु (for तौ) Ś1 Ñ1 D10 जीवेतौ न प्रकुर्याता, M1 जानन्तौ नाद्य कुर्यात् (sic) ✻ Cv जानन्तौ तौ न कुर्यातामिति पाठ ✻ —$^{d}$) D2.7–9 T1 Ct मम (for मम) D1 पृथिव्यामपि, D6 मोर्व्यामपि हि (sic) D6 कर्षे तु परि, D1 मोर्व्यामपि हि मम (hypm.) D11

नूनं ममैव शोकेन स वीरो लक्ष्मणाग्रजः ।
देवलोकमितो यातस्त्यक्त्वा देहं महीतले ॥ ३८
धन्या देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
मम पश्यन्ति ये नाथं रामं राजीवलोचनम् ॥ ३९
अथवा न हि तस्यार्थो धर्मकामस्य धीमतः ।
मया रामस्य राजर्षेर्भार्यया परमात्मनः ॥ ४०
दृश्यमाने भवेत्प्रीतिः सौहृदं नास्त्यपश्यतः ।
नाशयन्ति कृतघ्नास्तु न रामो नाशयिष्यति ॥ ४१
किं नु मे न गुणाः केचित्किं वा भाग्यक्षयो हि मे ।
याहं सीता वरार्हेण हीना रामेण भामिनी ॥ ४२
श्रेयो मे जीवितान्मर्तुं विहीना या महात्मना ।
रामादक्लिष्टचारित्राच्छूराच्छत्रुनिबर्हणात् ॥ ४३
अथवा न्यस्तशस्त्रौ तौ वने मूलफलाशनौ ।
भ्रातरौ हि नरश्रेष्ठौ चरन्तौ वनगोचरौ ॥ ४४
अथवा राक्षसेन्द्रेण रावणेन दुरात्मना ।
छद्मना घातितौ शूरौ भ्रातरौ रामलक्ष्मणौ ॥ ४५
साहमेवंगते काले मर्तुमिच्छामि सर्वथा ।
न च मे विहितो मृत्युरस्मिन्दुःखेऽपि वर्तति ॥ ४६ G. 5. 26. 0 B. 5. 26. 44 L. 5. 20. 66

नोऽर्थामपि हि; M3 तच्चोऽर्थं मम (for नोऽर्थो हि मम). D6 मार्गामि. —After 37, D3 reads 44–45.

38 Ñ2 V B D6 om. 38 (cf. v.l. 26 and 30). —a) D1 हूतं (for नूनं). D3 च मम (for ममैव). —b) Ś1 D10 रामो (for वीरो). —For 38cd, Ś1 Ñ1 D1-4.10.11 subst.:

595* देवातिथेयं शुद्धात्मा मन्ये त्यक्त्वा गतोऽनयः।
[Ñ1 धर्मात्मा (for शुद्धात्मा). D1 गतव्ययः, D3 देवातिथिशुद्धात्मा गतो वैश्रवण' क्षय-]

39 Ñ2 V B D6 om. 39 (cf. v.l. 26 and 30). —a) D2 देवा धन्या (by transp.). —b) D3 यथा ह्यप्सरसां गणा. —c) Ñ1 ये च (for मम) and मे (for ये). D5.7-9 T2 M1 Ct वीरं (for नाथं). D2 तत्र द्रक्ष्यंति ये राम. —d) D3 वीरं (for राम).

40 Ñ2 V B D6 om. 40 (cf. v.l. 26 and 30). —a) D6 यथा वा (for अथवा). D3 नियतश्चार्थो (sic) (for न हि तस्यार्थो). —b) T2 धर्मज्ञस्य. —d) Ñ1 विहितात्मनः. —After 40, Ñ1 ins.:

596* न मयं धर्मज्ञो राजा सोऽनुमन्येत कर्हिचित्।

41 Ñ2 V B D6 om. 41 (cf. v.l. 26 and 30). —a) D3 पश्यतो हि (for दृश्यमाने). —b) G1 सौहृदं. D7-9 G2.3 M1 Ck.t (अ)दृश्यतः; T2 (अ)पश्यति, Cm.g as in text (for (अ)पश्यत). Ś1 Ñ1 D1-4.10.11 अदृश्ये प्रीति(Ñ1 D3 रति; D2.4 मति; D5 नापि)सौहृद. —c) G1 नाशयतु. D3 ये, D11 च (for तु).

42 Ñ2 V B D6 om. 42 (cf. v.l. 26 and 30). —a) Ñ1 D1.2.4.5.11 तु (for नु). D3 ममैव हि (for किं नु मे न). D1 किंचित्; D10 सति (for केचित्). D11 गुणः कश्चित्. Ś1 किं रामे न गुणाः सन्ति; D3 किं वा मयगुणाः केचित्. —b) D3 यथा (for किं वा). D2 (ऽ)पि वा. T1.2 G3 M3 मम (for हि मे). —cd) D1 च. D2.4 T1 M2 हि; Ct as in text (for (अ)हं). Ś1 Ñ1 D1.2.4.10.11 हीना. D5 M3 सीता, G1 स्थिता (for सीता). D10 वरार्हेन (sic) (for वरार्हेण). T2 G2.3 M3 याहं सीतासि रामेण (for a). D5 T2 विना (for हीना) T2 G2.3 M3 शून्येन (for रामेण) G1 कामिनी. Ś1 Ñ1 D1.2.4.10.11 रामेण विहितात्मना (for d). D3 धर्ममेवानुतापेन राघवो न विपद्यते.

43 Ñ2 V B D6 om. 43 (cf. v.l. 26 and 30). —a) Ś1 D10 श्रेयान् (for श्रेयो). D3 जीवित (for °तान्). —T1 damaged from न्म up to रा in 45a. Ś1 Ñ1 D10.11 मृत्युर; D3 स्वर्गं; Cr.g as in text (for मर्तुं). —b) Ś1 D2.10.11 ह्यहं ततः; Ñ1 ह्यमतयं; D1.4.5.7-9 T2 G2 M3 Cr.g महात्मनः; M1.2 समंततः; Ct as in text (for महात्मना). Cf. Cr· विहीनाहं महात्मन इति पाठः; Cg: महात्मनो रामाद्विहीनाया महात्मना रामेण विहीनायाः। तृतीयार्थे पञ्चमी।; so also Cm.k. —c) Ś1 D10 अक्लुष्ट-; D1 प्रशस्त; D3 भरिष्ट- (sic) (for अक्लिष्ट-).

44 Ñ2 V B D6 om. 44 (cf. v.l. 26 and 30). T1 damaged for 44 (cf. v.l. 43). D3 reads 44–45 after 37. —a) Ś1 D10 त्यक्त- (for न्यस्त-) —b) D3 वन- (for वने). Ś1 Ñ1 D2.4.5.10 T2.3 G1.3 M1.2 -फलाशिनौ. —c) G1 सूतरौ (sic) (for भ्रातरौ). D1.4 पुरुष-; M1 तु नर- (for हि नर-). D3 शोकसमुद्वृत्तौ. —d) Ś1 Ñ1 D10 चरतो; D3 तु स्थितौ; D5 चरंत(:); T3 G2 M3 Cg सहितौ (for चरन्तौ).

45 Ñ2 V B D6 om. 45 (cf. v.l. 26 and 30). T1 illeg. up to रा in a (cf. v.l. 43). D3 reads 44–45 after 37. —a) D3 भ्रमतौ (for अथवा). —c) D6 मोहितौ (sic); D5 M3 Cg (अ)स हितौ (for घातितौ). Ś1 Ñ1 D2.4.10.11 वीरौ (for शूरौ). —After 45, Ñ1 ins.:

597* भ्रंयतो मम वीरेतौ द्विपविक्षतरौ।

46 Ñ2 V B D6 om. 46 (cf. v.l. 26 and 30). —a) D3 त (for सा). D7-9 M3 एवं वै. —b) M1 यमम् (for मर्तुम्). D3 M2 सर्वशः; T2 G1 सर्वतः. —T1 damaged for 46c–47. —c) D3 हि (for च). —d)

# २५

इत्युक्ताः सीतया घोरं राक्षस्यः क्रोधमूर्छिताः ।
काश्चिज्जग्मुस्तदाख्यातुं रावणस्य तरस्विनः ॥ १
ततः सीतामुपागम्य राक्षस्यो घोरदर्शनाः ।
पुनः परुषमेकार्थमनर्थार्थमथाब्रुवन् ॥ २
हन्तेदानीं तवानार्ये सीते पापविनिश्चये ।
राक्षस्यो भक्षयिष्यन्ति मांसमेतद्यथासुखम् ॥ ३
सीतां ताभिरनार्याभिर्दृष्ट्वा संतर्जितां तदा ।
राक्षसी त्रिजटा वृद्धा शयाना वाक्यमब्रवीत् ॥ ४
आत्मानं खादतानार्या न सीतां भक्षयिष्यथ ।
जनकस्य सुतामिष्टां स्नुषां दशरथस्य च ॥ ५
स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः ।
राक्षसानामभावाय भर्तुरस्या भवाय च ॥ ६
एवमुक्तास्त्रिजटया राक्षस्यः क्रोधमूर्छिताः ।
सर्वा एवाब्रुवन्भीतास्त्रिजटां तामिदं वचः ॥ ७
कथयस्व त्वया दृष्टः स्वप्नोऽयं कीदृशो निशि ॥ ८ G. 5 27 8 B. 5 27 8 L. 5 21 8

## 25

Ms begins with श्रीरामाय नमः

1 T1 damaged from ᵃ up to रावणस्य in ᵈ. —ᵃ) Ś1 Ñ1 D2 8 9 10 11 G2 M2 घोरा D4 तास्तु (for घोरं) Ñ2 V B D5 सीतयानद्य(B2 °द्धु च)च श्रुत्वा —After 1ᵃᵇ, Ñ2 ins, Ś1 D2-4 10 11 ins 1 3 only after 1ᵃᵇ

601* महावीरं महा * * सर्वलोकभयंकरम् ।
जर्जरं विरावस्य कुम्भाणां प्रस्थिता स्थिरः ।
तूर्णमुत्पतिता सूक्ष्मा सूक्ष्मशक्तिपरश्वधाः ।
उपवासकृशप्रत्यन्यो राक्षस्यो भीमदर्शनाः ।
काश्चिद्व्रज्यमयासास्तु सीतां वा क्रूरदर्शना । [5]

[(1 3) Ñ1 घोरा, D4 11 घोरा (for सूक्ष्मा) Ś1 D2 10 शक्तिपर (by transp) D8 शक्तिशूलासिहस्ताश्च (for the post half) ]

—ᵃ) Ñ V B D6 जग्मुः काश्चित् (by transp) D3 जग्मुः सवाय Ñ1 V1 तथा (for तद्) Ś1 D2 10 11 जग्मुरन्यास्तथा राक्षसीः, D1 2 जग्मुस्तस्य तमाख्यातुं —ᵈ) Ñ2 V B1 2 4 D1 4-7 9 G1 दुरात्मनः (for तरस्विनः)

2 Ñ1 illeg for 2ᵃᵇ. —ᵃ) Ñ2 V B D1 सत्वरं (for ततः) —D6 om (hapl) 2ᵇ-3ᵇ —ᵇ) D7-9 M1 भीम (for घोर) —ᶜ) Ñ2 B D1 4 8 एकार्थम् (for एका°) —Ñ1 illeg for 2ᵈ-5ᵇ. —ᵈ) B2 सनाथा तास् (for अनर्थार्थम्) M3 [अ]नर्थीर्थम् (sic) B4 D3 8 12 अनर्थार्थं (D11 °र्थं हि)इमब्रुवन् —for 2ᶜᵈ, Ś1 D10 subst

602* परुषं परुषानर्थमनर्थार्थमिदमब्रुवन् ।

[D10 अब्रवीत् (sic) ]

3 D6 om 3ᵃᵇ, Ñ1 illeg for 3 (for both cf v l 2). T1 damaged for 3 4 —ᵃ) D2 3 9 T2 3 G M all Cs मद्य (for हन्त) M1 [इ] मानि (sic) Ñ2 B3 4 D1 दद्या, G1 हत्या (sic) (for तव) —ᶜ) D5 भक्षयिष्यामो —ᵈ) Ś1 D10 तथा (for एतद्) Ñ2 V B D5 मामान्यु(B2 °समु)त्कृत्य सर्वशः

4 Ñ1 V1 illeg for 4 (for Ñ1 cf v l 2) T1 damaged for 4 (cf v l 3) —ᵃᵇ) Ś1 Ñ2 V2 B D1 3 4 8 10 11 भीमैर्(Ś1 प्रभ)भिस्ता (for संतर्जिता) D3 यथा (for तदा) D2 सीता तासिश्च सीतामिहैष्टा (sic) निर्भर्त्सिता तदा ‰ Cr सीतां ताभिरनार्याभिर्दृष्ट्वा भर्त्सितां इति पाठः ‰ —ᶜ) D1 6 नाम (for वृद्धा) —ᵈ) B1 समागता, D1 4 7 8 G1 Ch1 प्रबुद्धा, Cg as in text (for शयाना)

5 Ñ1 illeg for 5ᵃᵇ (cf v l 2) —ᵃ) B1 (अ)नार्ये (sic), D1 8 [अ]नार्या (sic) —ᵇ) D10 खादयिष्यथ —ᶜ) Ñ2 V B D1 [आ]त्मजाम् (for सुताम्) D2 इष्ट (for इष्टा) —ᵈ) G1 महाराजदशरथस्नुषा

6 T1 damaged for 6-7 Ñ1 illeg. for 6-7ᵇ —ᵃ) B2 [s]वापि, D2 ह्यत्र (marg) (for ह्यद्य) —ᵇ) D5 दुर्दान्तो (for दारुणो) V B D1 3 10 रोम (for रोम) —ᶜ) G1 राक्षसीनाम्, Cm Ct as in text (for °सानाम्) —ᵈ) V2 B1 T3 G M1 ह्यपाय Cm Ct as in text (for भवाय) D11 भर्तुरस्यासभवाय च, T2 त्वभर्तुरभवाय च

7 T1 damaged for 7 (cf v l 6) Ñ1 illeg for 7ᵃᵇ (cf v l 6) —ᵇ) Ñ2 V B D5 प्रह्व(B2 प्रोक्ता) मैथिली (for क्रोधमूर्छिताः) Ś1 D2-4 10 11 राक्षस्योपास्य मैथिली (metri causa) —ᶜ) V1 D3 सर्वा एव सुरवी ता D11 सर्वा एव सुरवीस्ताम् (sic) —ᵈ) Ñ2 V1 1-3 D5 त्रिजटां परिवार्य ता —After 7, Ś1 Ñ V B D2-4 8 10 11 ins

603* अहोष श्रोतुमिच्छामस्त्वया दृष्टमदर्शनम् ।

[Ñ2 V B D5 श्रोतुमिच्छाम् मासं (for the prior half) Ñ2 D11 दृष्टम्...दृष्ट V3 B1 2 स्वप्नं स्वप्नं (for the post half) ]

8 D5 om. 8-9 —For 8, Ś1 Ñ V B D1 2 4 8 11 subst

तानि सर्वाणि रामाय आनीय हरियूथपाः ।
संहृष्टा दर्शयामासुर्गतिं तु न विदुस्तव ॥ ३६
तानि रामाय दत्तानि मयैवोपहृतानि च ।
स्वनवन्त्यवकीर्णानि तस्मिन्विहृतचेतसि ॥ ३७
तान्यङ्के दर्शनीयानि कृत्वा बहुविधं ततः ।
तेन देवप्रकाशेन देवेन परिदेवितम् ॥ ३८

पश्यतस्तानि रुदतस्ताम्यतश्च पुनः पुनः ।
प्रादीपयन्दाशरथेस्तानि शोकहुताशनम् ॥ ३९
शयितं च चिरं तेन दुःखार्तेन महात्मना ।
मयापि विविधैर्वाक्यैः कृच्छ्रादुत्थापितः पुनः ॥ ४०
तानि दृष्ट्वा महार्हाणि दर्शयित्वा मुहुर्मुहुः ।
राघवः सहसौमित्रिः सुग्रीवे स न्यवेदयत् ॥ ४१

G. 5. 33. 0
B. 5. 33. 42
L. 5. 33. 41

—[b]) Ś1 D10 हनया राक्षसेन तु. —[c]) Ś1 D1-4.10.11 T1.2 M2 -जाताति (for -जातानि). —[d]) Ś1 Ñ1 D1-4.10.11 नि(Ñ1 न; D3 नि)क्षिप्तानि; T1.2 M1 पति[2] (for पातितानि).

36 For subst. in Ñ2 V2 B D4, cf. v.l. 35 and 37. —[a]) Ñ1 संगृह्य (for सर्वाणि). Ś1 D2.4.10.11 संहृत्य; D1.3 संगृह्य (for रामाय). —Note hiatus between [a] and [b]. —[b]) Ś1 D1-4.10.11 रामाय; Ñ1 सर्वाणि; M1 आदाय (for आनीय). D1.3 हरिसत्तमाः; D2.4.11 T2 °यूथप: (for °यूथपाः). —[c]) D11 T2 दर्शयामाम (sic). D3 संहृष्टो दर्शयामास. —[d]) D3 च (for तु). D5 T2 न विविदुम् (for तु न विदुस्).

37 [a]) D4 स्थानि (for दत्तानि). D3 दत्तानि रामाय (by transp.). —[b]) D3 यथा (for मया). Ś1 D1.10 [अ]पहृतानि; G1 [उ]पहितानि; Cg.k.t as in text (for [उ]पहृतानि). M1 वै (for च). —[c]) Ś1 Ñ1 D10 वि(Ñ1 प्र)कीर्णानि; M1 [अ]वशीर्णानि; Ck.t as in text (for [अ]वकीर्णानि). —[d]) D3 विहित-; T1.2 G3 M3 Ck विगत-; G1 निहत-; Ct as in text (for विहृत-). Ś1 D10 ततो विपुलचेतसा (D10 °सः); D1.3.4 स्वया विवि(D3 °हृ)तचित्तया; G2 तत यानि महीतले. Ck: विगतचेतसीति स्वत्यागश्रवमपि सप्तमी। स मूर्छितचित्तोऽभूदित्यर्थः; So also Ct. —For 35–37, Ñ2 V2 B D4 subst. and read after 733*:

711* अस्माभिस्ते महार्हाणि भूषणान्यपि भूषिते।
विप्रकीर्णानि दृष्टानि निहितानि हि जानकि।
यानि ते स्वयपविद्धानि ह्रसा ह्रियमाणया।
तानि रामाय दत्तानि मया सान्त्वित मैथिलि।

[(l. 1) B1.2 तु (for ते). Ñ2 B3 D4 त्व(B4 [अ]पि) भूषिते; V2 [अ]पि भूतले; B2 महीतले (for [अ]पि भूषिते). —(l. 2) B4 विविधानि (for निहितानि). V2 B1.4 च (for हि). D4 हितानि हि (for हि जानकि). —(l. 3) B1 तानि (for यानि). B2 स्वपविद्धानि. B1 सदा पल्लवविद्धानि (for the prior half).]

—Thereafter they read 38–46 (om. 39 and 41).

38 For sequence in Ñ2 V2 B D4, cf. v.l. 37. D6 reads 35[cd] in marg. —[a]) G1 [अ]ङ्गे; M1 [ए]व (for [अ]ङ्के). —[b]) Ś1 Ñ1 D1.2.4-11 ततः; V2 B1-4 मुहुः; B1 D1.2.4 बहु; D3 G1 M1 तव (for ततः). G2 ग्धारयित्वा मुहुर्मुहुः. —[c]) Ñ D2.6.9.11 देवि (for तेन). B1 देवि- (sic) (for देव-). Ñ1 D1 -प्रकाशेन. Ñ2 B D4 -निभासेन; D1.3 G2 -प्रभावेन (for -प्रकाशेन). Ś1 D10 देवि देवि प्रकाशं मे. —[d]) Ñ2 V2 B D4 रामेण (for देवेन). B1 परिसेवितं; D1.3 परिदेवना (D3 °ने). Ś1 Ñ1 D2.3.10 देवी (Ś1 D10 देवी; Ñ1 मौनि ) रि कस्ये चिरं. —After 38, Ś1 Ñ1 D1-4.10.11 ins.:

712* एवंदेवप्रतिघः शोकोपहतचेतनः।

[Ś1 D2.10 दर्शयित्वापदेन (for the prior half). Ś1 Ñ1 D2.10 -चेतन (Ñ1 °न) (for -चेतनः).]

39 Ñ2 V2 B D4 om. 39. D2.8 om. 39[cd]. —[a]) D2.3.8 S तानि (for तस्य). —[b]) Ś1 Ñ1 D10 तप्यतस्; D11 तो पतत् (corrupt) (for ताम्यतश्). —[c]) Ś1 Ñ1 D1-4.10.11 प्रा(Ñ1 D1.4.11 प्र)ज्वालयत्; D3 प्रदीपयत्; Ck.t प्रादीपयन् (for प्रादीपयन्). —[d]) D2.8 G1 तस्य (for तानि). D11 T2 -हुताशनः.

40 For sequence in Ñ2 V2 B D4, cf. v.l. 37. —[a]) Ś1 Ñ1 D1.4.10 शोचितं; Ñ2 V2 D1 G Ct शायितं; D3 सेवितः (sic); D2 शयनं; Cg as in text (for शयितं). Ś1 Ñ1 D1-4.10.11 सुचिरं; B1 च चिमु (sic); B2 च वहे; D2.4 चरितं; T1 तु चिरं (for च चिरं). Ñ2 V2 B D4 भूमौ (for तेन). —[c]) Ś1 D2.10 मः; Ñ V2 B D1-4.8.11 M1 च (for [अ]पि). —[d]) B2 D1.3 उत्थापितं. Ñ V2 B2.4 D4 ततः; B1.2 तदा (for पुनः).

41 Ñ2 V2 B D4 om. 41. —[a]) M1 महाबाहुर् (for °र्हाणि). —[b]) D2.9 T2 पुनः पुनः. —After 41[ab], Ñ1 ins. a line which is illeg. —[d]) M1 सुग्रीवं (for सुग्रीवे). Ś1 Ñ1 D1-4.10.11 सुग्रीवमनुपश्यत(Ś1 Ñ1 D10 °दृशत्)यत्; D4 सुग्रीवं समवेक्षयत्; D5 G2 Cv.g सुग्रीवे संन्यवेदयत्; D7.9 T2 G1 सुग्रीवे संन्य(T2 न्य न्य)वेदयत्; G1 सुग्रीवाय न्यवेदयत्. —After 41, Ñ1 ins.:

713* आलिङ्ग्य च वपुषां वस्त्र राघो विचिन्तनः।

G 5 32 35
B 5 35 43
L 5 29 47

स त्वदादर्शनादार्ये राघवः परितप्यते ।
महता ज्वलता नित्यमग्निनेवाग्निपर्वतः ॥ ४२
त्वत्कृते तमनिद्रा च शोकश्चिन्ता च राघवम् ।
तापयन्ति महात्मानमग्न्यगारमिवाग्नयः ॥ ४३
तवादर्शनशोकेन राघवः प्रविचाल्यते ।
महता भूमिकम्पेन महानिव शिलोच्चयः ॥ ४४
काननानि सुरम्याणि नदीप्रस्रवणानि च ।
चरन्न रतिमाप्नोति त्वामपश्यन्नृपात्मजे ॥ ४५
स त्वां मनुजशार्दूलः क्षिप्रं प्राप्स्यति राघवः ।
समित्रबान्धवं हत्वा रावणं जनकात्मजे ॥ ४६
सहितौ रामसुग्रीवावुभावकुरुतां तदा ।
समयं वालिनं हन्तुं तव चान्वेषणं तथा ॥ ४७
ततो निहत्य तरसा रामो वालिनमाहवे ।
सर्वर्क्षहरिसंघानां सुग्रीवमकरोत्पतिम् ॥ ४८
रामसुग्रीवयोरैक्यं देव्येवं समजायत ।
हनूमन्तं च मां विद्धि तयोर्दूतमिहागतम् ॥ ४९

42 For sequence in Ñ2 V2 B D6 cf v l 37 D11 om $42^{cd}$ —$^{a}$) M1 आर्यो D1 3 [अ]दर्शनेनार्ये Ś1 Ñ1 D2 10 तवादर्शनजेनार्ये (Ñ1 °र्थि) Ñ2 V2 B D6 त्वद्दर्शनपरो देवि, D4 तव ह्यादर्शनेनार्ये —$^{b}$) Ś1 D10 मनुर्भि (for राघव) D10 परितापयते (for °तप्यते) D2 राम शोकेन चाल्यते —$^{c}$) D11 शोकेन महता (for महता ज्वलता) Ñ2 V2 B D6 देवि (for नित्यम्) —$^{d}$) Ñ2 V2 B D6 वह्निना (for अग्निना) G1 [ए]व (for [इ]व) Ś1 D2 3 10 हि (for [अ]ग्नि)

43 For sequence in Ñ2 V2 B D6 cf v l 37 —$^{a}$) D1 त्वद्दर्थे Ś1 Ñ V2 B D2 4 6 10 12 मदनश्चैव (V2 B1 4 °न, B3 °व) D1 3 मदनो देवि (for तमनिद्रा च) —$^{b}$) Ś1 B1 4 D1 10 12 शोकचिता (for शोकश्चिन्ता) —$^{c}$) D2 बाधयन्ति (for तापयन्ति) —$^{d}$) Ś1 Ñ1 V2 B D2–7 9–12 G1 [-अ]गारम् (for [अ]गारम्)

44 For sequence in Ñ2 V2 B D6 cf v l 37 —$^{b}$) D6 7–9 G2 M1 परिचा(G2 °पा)ल्यते (for प्रविचाल्यते) —For 44 Ś1 Ñ V2 B D1–4 6 10 11 subst

714* तवादर्शनजेनार्ये शोकेन स विचाल्यते ।
महाभूमिचलेनेव शिलाधातुचितोऽचल ॥

[(l 1) Ñ2 V2 B D6 [अ]दर्शनयुक्तेन V2 °शोकेन D1 3 चान्यजेनार्ये N2 राघव V2 युक्तेन (for शोकेन) Ś1 D2 3 10 च D1 4 11 तु (for स) Ñ1 परितप्यते Ñ2 B1 परिचाल्यते —(l 2) D6 [ए]व (for [इ]व) B4 D2 चलेनै(B4 °ने)व D1 6 चलेनैव B2 (m as above) D11 महाभूचलनेनै (D11 °ने)व (for the prior half) Ś1 D10 सलो (for चितो) Ñ2 V2 B D6 गिरि (for अचल) D1 शिलाधातुविचल (for the post half) ]

45 For sequence in Ñ2 V2 B D6, cf v l. 37 —$^{a}$) D6 च रम्याणि —$^{b}$) T3 M3 नदी (for नदी ) D6 प्रस्रवणानि —For 45 Ś1 Ñ V2 B D1–4 6 10 11 subst

715* तानि रम्याणि पश्यन्स काननानि महान्ति च ।
रतिं न विन्दते रामस्त्वामपश्यन्नृपात्मजे ।

[(l 1) D4 संपश्यन् (for पश्यन्स) Ñ1 रम्याणि तानि पश्य वै Ñ2 V2 B1 3 4 D6 नदी रम्या स(V2 °म्याश्च) पश्यन्वै B2 नदीं रम्यमपश्यन्वै (sic) (for the prior half) —(l 2) Ñ2 D6 नृपात्मज B2 नृपात्मजा B3 वरानने D10 नन्दिनि (for नृपात्मजे) ]

46 For sequence in Ñ2 V2 B D6 cf v l 37 Ś1 D10 om (hapl ) 46 —$^{a}$) Ñ2 V2 B D6 पुरुष (for मनुज ) —$^{b}$) B3 प्रिया (for क्षिप्र) Ñ V2 B D1–4 6 11 द्रक्ष्यति, M1 पृच्छति (for प्राप्स्यति) —V2 om $46^{c}$–54 —$^{c}$) B3 T3 ससुतबान्धवं, B4 राक्षसान्समरे (for समित्रबान्धवं) —$^{d}$) N1 लोककण्टक (for जनकात्मजे)

47 V2 om 47 (cf v l 46) Ñ2 B D6 om 47–55 —$^{a}$) D6 सह तौ (for सहितौ) —$^{b}$) Ś1 Ñ1 D1 4 10 11 तत, D6 तथा (for तदा) —$^{c}$) D1 सहितौ (sic) (for समय) D11 T हत्वा (for हन्तु) —$^{d}$) D5 T2 3 M3 तदा, D7 9 प्रति (for तथा) Ś1 Ñ1 D1 4 10 11 तौ तवान्वेषणाय च —After 47 D5 7 9 S ins

716* ततस्ताभ्यां कुमाराभ्यां वीराभ्यां स हरीश्वर ।
किष्किन्धां समुपागम्य वाली युधि निपातित ।

[(l 1) D5 सहित (for वीराभ्यां) M1 हरीश्वर —(l 2) T3 M3 समनुपाप्य (for समुपागम्य) D2 9 T1.3 M3 युद्ध (for युधि) ]

48 Ñ2 V2 B D6 om 48 (cf v l 46 and 47) —$^{c}$) Ś1 D10 सैन्यानां, D1–4 11 सिंहानां (for संघानां) —After 48, Ñ1 ins

717* राम सर्वधनुष्मतां श्रेष्ठो भीमपराक्रम ।

49 Ñ1 V2 B D2 4 om 49 (for all except D3 cf v l 46 and 47) —$^{a}$) Ś1 D10 11 सख्य (for ऐक्य) —$^{b}$) D1 लक्ष्मैव (for देव्येव) —Ś1 D10 om $49^{cd}$ —$^{c}$) D7 9 देवि (for विद्धि) Ñ1 मां विजानीहि (hypm ) (for च मां विद्धि) —$^{d}$) D5 7 9 उपागत (for इहा°) Ñ1 तथाभूतमिवागत —After 49 D1 4 ins while Ś1 D10 ins after $49^{ab}$ (owing to om ) an addl colophon

[*Sarga name* Ś1 D4 हनुमद्वाक्यं, D1 सीताभाषणं, D10 लङ्कापर्वणि सीतासंभाषणं —*Sarga no* D1 4 10 om Ś1 31 ]

स्वराज्यं प्राप्य सुग्रीवः समानीय महाहरीन् ।
त्वदर्थं प्रेषयामास दिशो दश महाबलान् ॥ ५०
आदिष्टा वानरेन्द्रेण सुग्रीवेण महौजसः ।
अद्रिराजप्रतीकाशाः सर्वतः प्रस्थिता महीम् ॥ ५१
अङ्गदो नाम लक्ष्मीवान्वालिसूनुर्महाबलः ।
प्रस्थितः कपिशार्दूलस्त्रिभागबलसंवृतः ॥ ५२
तेषां नो विप्रनष्टानां विन्ध्ये पर्वतसत्तमे ।
भृशं शोकपरीतानामहोरात्रगणा गताः ॥ ५३
ते वयं कार्यनैराश्यात्कालस्यातिक्रमेण च ।
भयाच्च कपिराजस्य प्राणांस्त्यक्तुं व्यवस्थिताः ॥ ५४
विचित्य वनदुर्गाणि गिरिप्रस्रवणानि च ।
अनासाद्य पदं देव्याः प्राणांस्त्यक्तुं व्यवस्थिताः ॥ ५५
भृशं शोकार्णवे मग्नः पर्यदेवयदङ्गदः ।
तव नाशं च वैदेहि वालिनश्च तथा वधम् ।
प्रायोपवेशमस्माकं मरणं च जटायुषः ॥ ५६ G. 5 32 25 B. 5 35 61 L. 5 37 9

50 N2 V2 B D6 om 50 (cf v l 46 and 47) —a) Ś1 Ñ1 D1 8 10 11 T2 3 स राज्य, D7 स्व राज्य (for स्वराज्य) —b) D1 9 स्वानालीय (for समानीय), Ś1 D10 M3 हरीश्वरान्, D2 महान्हरीन्, D3 तथा हरीन्, D7-9 महाकपीन् (for महाहरीन्) —c) Ś1 D1-4 10 11 त्वदर्थं प्रेषयत्सर्वान् —d) D11 दिशि (for दश) Ś1 D10 T1 2 महारव —For 50cd, Ñ1 subst

718* ***त्वदर्थेन हरीन्पश्चाद्दिशो दश ।
महाबलान्महाकायान्महावीर्यपराक्रमान् ।

51 Ñ2 V2 B D6 om 51 (cf v l 46 and 47) —b) D3 G1 M1 हरयश्च G2 वानराश्च (for सुग्रीवेण) Ś1 Ñ1 D1-4 10 11 महात्मना, T1 वरानने, T2 M3 महौजसा, T3 G2 वनौकस (for महौजस) —After 51ab, D2 ins

719* अद्रिराजप्रतीकाशान्सन्दिदेश महाबलान् ।
—c) D2 प्रतीकास —d) D2 प्रस्थितो Ñ1 प्रेषिता * त्रि (for प्रस्थिता महीम्) —After 51, Ñ1 ins a line which is illeg —After 51 D5 7 8 S ins

720* ततस्ते मार्गमाणा वै सुग्रीववचनातुराः ।
चरन्ति वसुधां कृत्स्नां वयमन्ये च वानराः ।

[ (l 1) D5 T1 2 Cgp वचनानुगा M2 °तुरा, Cr g k t as above (for °तुरा) ※ Cr सुग्रीववचनानुगा इति पाठः ※ —(l 2) G3 चरन्ति (for चरन्ति) ]

52 Ñ2 V2 B D6 om 52 (cf. v l 46 and 47) —b) Ś1 Ñ1 D10 T2 M2 वालिपुत्रो Ñ1 प्रतापवान् (for महाबल) —After 52ab, Ñ1 ins

721* महाधनो महाकायो द्विषद्बलविनाशकः ।
—Ñ1 illeg for 52c —After 52, D1 3 ins

722* दक्षिणां दिशमास्थाय मेरुराजेन पालिताम् ।
—Thereafter D1 3 cont , while Ś1 Ñ1 D2 4 10 11 ins after 52

723* त्वां देवि राघवस्यार्थे सर्वे वै मृगयामहे ।
[ Ś1 त्वां देवि (sic) D10 सर्वशो (for सर्वे वै) D11 मृगयावहे (sic).]

53 Ñ2 V2 B D6 om 53 (cf v l 46 and 47) —a) D4 T2 G3 विप्रवि (T2 °प्र)हाना, D10 T1 3 G1 2 M2 Ck t विप्रणष्टाना, Cv m g as in text —b) M1 मध्ये (for विन्ध्ये) Ñ1 पर्वतमस्तक —After 53ab, Ś1 D10 ins

724* क्षुधार्ताना दिने वापि तृषार्ताना तदामताम् ।,
while Ñ1 D1 4 11 ins after 53ab

725* क्षुत्पिपासा निराशाना दिने कस्मिश्चिदागताम् ।
[ D1 3 क्षुत्पिपासा (for क्षुत्पिपासा) D2 कस्मिन्वेदिनि ]
—c) D10 भ्रम (sic) (for भृश) —d) D2 स्वहोरात्र D3 महोरात्रि (for अहोरात्र )

54 Ñ2 V2 B D6 om 54 (for all except D1 cf v l 46 and 47) —d) D7 9 व्यवस्थिता (for व्यवस्थिता) Ś1 Ñ1 D1 10 11 कालात्ययविशङ्कया (Ś1 [ marg also ]°लघया), D1 3 कालातिग (D3 °क्र )महाकया

55 Ñ2 B D6 om 55 (cf v l 47) V2 reads 55 after l 15 of 710* —a) Ś1 Ñ1 V1 D1 2 4 10 11 विचीय, D5 6 M2 विचित्य (for विचित्य) Ś1 Ñ1 V2 D1-4 7-11 गिरि (for वन ) —b) Ś1 V2 D1-4 7-11 नदी, Ñ1 D6 नदी (for गिरि ) —c) D1 3 प्रवृत्तिं त (for पदं देव्या ) Ñ1 समासाद्यवयन्त्या च —d) Ś1 N1 V2 D1 4 10 11 उपस्थिता , D6 reads in marg T1 2 G2 M1 2 समुद्यता (for व्यवस्थिता ) —After 55 Ś1 Ñ1 D1 4 7 8-11 ins while Ñ2 V2 B D6 cont after 710*

726* ततस्तस्य गिरेर्मूर्ध्नि वयं प्रायमुपास्महे ।
अथ न पर्वते विन्ध्ये निराशानामनिन्दिते ।

[ (l 1) B2 तदा (for ततस्) —D7 8 om l 2 —(l 2) D11 पतितो विंध्यो (sic) Ñ2 V2 B D6 निराशानविधुनि (B2 °ते) (for the post half) ]
—Thereafter D7 8 cont while D1 3 S ins after 55

727* दृष्ट्वा प्रायोपविष्टांश्च सर्वान्वानरपुङ्गवान् ।
[ G1 तदा दृष्ट्वोपविष्टांश्च (for the prior half) ]

56 a) Ñ2 V2 B D6 मग्नान् (for मग्न ) —b) Ñ2 V2 B D6 अंगद पर्यदेव (V2 B1 प्रत्यवेद, B2 प्रत्यबोध,

G 5 31 0
B 5 35 61
L 5 30 10

तेषां नः स्वामिसंदेशान्निराशानां मुमूर्षताम् ।
कार्यहेतोरिहायातः शकुनिर्वीर्यवान्महान् ॥ ५७
गृध्रराजस्य सोदर्यः संपातिर्नाम गृध्रराट् ।
श्रुत्वा भ्रातृवधं कोपादिदं वचनमब्रवीत् ॥ ५८
यवीयान्केन मे भ्राता हतः क्व च विनाशितः ।
एतदाख्यातुमिच्छामि भवद्भिर्वानरोत्तमाः ॥ ५९
अङ्गदोऽकथयत्तस्य जनस्थाने महद्वधम् ।
रक्षसा भीमरूपेण त्वामुद्दिश्य यथातथम् ॥ ६०
जटायोस्तु वधं श्रुत्वा दुःखितः सोऽरुणात्मजः ।
त्वामाह स वरारोहे वसन्तीं रावणालये ॥ ६१
तस्य तद्वचनं श्रुत्वा संपातेः प्रीतिवर्धनम् ।
अङ्गदप्रमुखाः सर्वे ततः संप्रस्थिता वयम् ।
त्वद्दर्शनकृतोत्साहा हृष्टास्तुष्टाः प्लवंगमाः ॥ ६२
अथाहं हरिसैन्यस्य सागरं दृश्य सीदतः ।
व्यवधूय भयं तीव्रं योजनानां शतं प्लुतः ॥ ६३

B2 पर्यंवा()यत् —d) Ñ1 वालिनाश D2 10 11 तथाविध, D8 यथा वध M3 वध तथा (by transp) (for तथा वधम्) —f) Ś1 Ñ V2 B D2 4 6 10 11 विनाश च D1 3 वध चैव (for मरणं च)

57 Ñ2 V2 B D6 om 57 —a) Ś1 Ñ1 D10 सदेशे, G1 सदेश (for संदेशान्) —c) Ś1 Ñ1 D2 8 10 11 इवोपेत, D1 3 इवायत्त, D5 7 9 T M2 इहायात, Ck t as in text (for इवायात) —d) G1 प्रभु (for महान्) Ś1 N1 D1-8 10 वानर(Ś1 D10 चेद्)मब्रवीत्, D11 वै तदाब्रवीत् (for वीर्यवान्महान्)

58 b) Ś1 Ñ1 D1-8 10 11 वीर्यवान्, D8 नामत (for गृध्रराट्) —Ś1 Ñ1 D1-8 10 11 om 58cd —c) D8 भ्रातुर्वधं (for भ्रातृवधं) T3 शोकाद् G1 घोरम् (for कोपाद्) —For 58 Ñ2 V2 B D6 subst

728* तच्छ्रुत्वा गृध्रराजस्य भ्राता संपातिरब्रवीत् ।

59 a) T3 मे हत कन (for केन मे भ्राता) —b) D3 हत क्व न, M1 हत स च T3 हतो भ्राता G1 निहत क्व M3 हत क्वचिन् (for हतः क्व च) D1 निवासित, D7 9 M2 निपातित (for विनाशित) Ñ2 V2 B D2 4 6 हत कस्मिंश्च कारणे, M3 हत क्वचन पातित —Ñ V2 B D1-8 10 11 om 59cd ❀ Ck भवद्भिराख्यातुमिच्छामीति भिन्नकर्तृकेऽपि तुमुन्, Ct आख्यातुमित्यसमानकर्तृकेऽपि तुमन्नार्षः ❀

60 b) D8 महद्वधं (for महद्वधम्) —d) D5 यथागत, D7 9 यथार्थत, T2 यथा तथा (for यथातथम्) —For 60 Ś1 Ñ V2 B D1 4 6 10 11 subst

729* शशंस चाङ्गदस्तस्मै जनस्थाने महद्वधम् ।
राक्षसेनातिकायेन त्वां च तत्रापवाहिताम् ।

[(l 1) V2 B तस्य D6 तत्र (for तस्मै) V3 महाबल, B1-3 D2 4 6 महाहवे B4 ततो वध (for महद्वधम्) —(l 2) D2 [अ]तिकायेन (for [अ]ति°) B3 रावणेनातिवृत्तेन हृत्वा त्वा दुरात्मना]

61 a) T1 G2 3 M3 जटायुषो (for जटायोस्तु) —For 61ab, Ś1 Ñ V2 B D1-4 6 10 11 subst

730* जटायुषश्च संपातिर्वधं श्रुत्वाति दुःखित ।

[ Ñ1 V2 B1 3 4 D6 तु (for च) Ñ2 V1 B1-4 D6 तु ,

D1 4 11 [दुः]ख (for [दुः]खि) D8 दुःखित (for दुःखित) ] —c) Ś1 Ñ1 D1-4 10 11 आचष्ट, D5 आह तु, T1 3 G1 V1 मानस, T2 आह नो (for आह स) Ñ2 V2 B D6 आचष्ट भवतीं देवीं(B1 4 °वि) —d) Ñ2 V2 B D6 निहित (for वसन्तीं)

62 Ñ1 illeg for 62ab For 62-63 Ñ2 V2 B D6 subst 733* —a) D3 ततस्त (for तस्य) —c) Ś1 Ñ1 D1-4 10 11 M3 तूर्णं (for सर्वे) —d) Ñ1 तु प्रस्थिता D1 3 प्रस्थापिता (for संप्रस्थिता) —After 62cd, D5 7 9 S ins

731* विन्ध्यादुत्थाय संप्राप्ताः सागरस्यान्तमुत्तरम् ।
[ T1 3 M3 उत्तर (for उत्तरम्) ]

—D10 om (hapl [see var]) 62e-63b —e) Ś1 Ñ1 D5 7 9 T °दर्शने (for दर्शन) D2 reads from कृतोत्साहा up to त्वद्दर्शन (see var) in 63c in marg —f) Ś1 Ñ1 हृष्टा पुष्टा, D2 3 4 8 11 हृष्टतु(D8 °तु)ष्टा, D1 2 हृष्टा पुष्टा, D6 हृष्टा ** (for हृष्टास्तुष्टा) —After 62 D5 7-9 S ins

732* अङ्गदप्रमुखाः सर्वे वेलोपान्तमुपस्थिताः ।
चिन्तां जग्मुः पुनर्भीमां त्वद्दर्शनसमुत्सुकाः ।

[ G3 om l 1 —(l 1) D3 8 9 (in marg) उपागता G2 उपाश्रिता (for उपस्थिता) —(l 2) D8 दीनां, T3 G M3 घोराम् (for भीमां) M1 महात्मानम् (for पुनर्भीमां) ]

63 D10 om 63ab D2 reads up to त्वद्दर्शन (see var) in a in marg (for both cf v l 62) —a) Ñ1 D1 ततोऽहं, G1 अहं हि (for अथाहं) D1 सैन्यानां (for सैन्यस्य) —b) D2 राघव (sic) (for सागर) Ś1 Ñ1 D1 2 11 G2 M3 प्रेक्ष्य, D3 प्रति, T3 प्राप्य, G1 वीक्ष्य (for दृश्य) D3 सीदता D1 सागर प्रेक्ष्य प्रसीदत (sic) —cd) D1 अवधूय (for व्यव°) Ś1 Ñ1 D1-4 10 11 त्वद्दर्शनकृतोत्साह पुप्लुवे शतयोजन —For 62-63 Ñ2 V2 B D6 subst

733* सोऽहं तु त्वत्परीतानां ज्ञातीनां सुमहद्भयम् ।
स्वामिकोपं च विज्ञाय श्रुत्वा चान्यकृतात्ययम् ।
अहं च कपिमुख्याश्च गुणवन्तो महाबलाः ।
त्वां देवि राघवस्यार्थे मार्गमाणा भ्रमामहे ।

लङ्का चापि मया रात्रौ प्रविष्टा राक्षसाकुला ।
रावणश्च मया दृष्टस्त्वं च शोकनिपीडिता ॥ ६४
एतत्ते सर्वमाख्यातं यथावृत्तमनिन्दिते ।
अभिभाषस्व मां देवि दूतो दाशरथेरहम् ॥ ६५
त्वं मां रामकृतोद्योगं त्वन्निमित्तमिहागतम् ।
सुग्रीवसचिवं देवि बुध्यस्व पवनात्मजम् ॥ ६६
कुशली तव काकुत्स्थः सर्वशस्त्रभृतां वरः ।
गुरोराराधने युक्तो लक्ष्मणश्च सुलक्षणः ॥ ६७
तस्य वीर्यवतो देवि भर्तुस्तव हिते रतः ।
अहमेकस्तु संप्राप्तः सुग्रीववचनादिह ॥ ६८
मयेयमसहायेन चरता कामरूपिणा ।
दक्षिणा दिगनुक्रान्ता त्वन्मार्गविचयैषिणा ॥ ६९
दिष्ट्याहं हरिसैन्यानां त्वन्नाशमनुशोचताम् ।
अपनेष्यामि संतापं तवाभिगमशंसनात् ॥ ७० G 5 32 0 B 5 35 77 L 5 31 13

[ (l. 1) B4 परीतानि B8 सुगद्दत्तम (for सुगद्दहरम्) —(l 2) B3 2 दुतनान् (for स्नुतनान्) ]

—Thereafter Ñ2 V2 B D6 read 711* and 38 46 (including star passages).

—After 63, Ñ1 ins.

734* **माकाशमाविश्य लङ्घने शतयोजनम् ।
सागर शशगम्भीरमुत्तर सागरालयम् । (sic)

64 V2 om 64–73, B om 64–72 Ñ2 D6 om, 64–66 —a) D6 वा (for च) Ś1 Ñ1 D2 4 10 11 इय लका (for लङ्का चापि) D3 3 इमा लङ्कामह रात्रौ —b) Ś1 D1 4 10 11 दृष्टा (D1 °पृा) वै, Ñ1 वीक्षि* D3 प्रविष्टो (for प्रविष्टा) D2 3 राक्षसाकुला, T2 रक्ष° (for राक्षसाकुला) D8 दृष्टा राक्षससकुला —c) D1 तु (for च) Ś1 D2 4 to 11 चापि सहृ (Ś1 °द) दृष्ट, D8 M1 2 चापि मे दृष्ट (for च मया दृष्ट) —After 64c, Ñ1 ins

735* *** परिवेष्टित ।
ततोधयप्रतीभाव

—d) D1 तत्र (for त्व च) Ś1 Ñ1 D1 2 4 10 11 शोकेन पीडिता (D1 °त) M3 शोकपरिप्लुता (for शोकनिपीडिता) D3 त्व शोकेन च पीडिता —After 64 Ś1 N1 D1–4 10 11 read 73–75

65 Ñ2 V2 B D6 om 65 (cf. v l 64) —c) D2 सीते, D4 reads in marg (for देवि)

66 Ñ2 V2 B D6 om 66 (cf v l 64) —a) Ś1 D2 10 11 M4 3 त, Ñ1 D1 3 5 7–8 T2 G3 तन् (for त्व) D8 च (for मा) Ś1 D2 4 10 11 रामकृतादेशः D3 रामस्य सन्देशात्, Cg as in text (for रामकृतोद्योग).—b) D3 [आ]गते (for °तम्) —D1 om 66cd —c) D4 [प]लवग (for सचिव) —d) Ñ1 D3 विद्धि मा (for बुध्यस्व) Ś1 D10 जनकात्मजे (for पवनात्मजम्)

67 V2 B om 67 (cf v l 64) Ś1 Ñ1 (illeg from 67c up to हि in 5 34 2a) D1–4 10 11 read st 67–72 (Ś1 D10 om 72) after 5 34 1, while Ñ2 V2 B D6 read st 67–72, 76ab (V2 B only st 76ab) and 77ab (including star passages) before 5 34 6 —a) Ś1 Ñ2 D1–4 9 10 11 देवि काकुत्स्थ, Ñ1 राघवो देवि (for तव काकुत्स्थ) —b) D4 6 -शास्त्र (for शस्त्र) —c) D8 सक्तो (for युक्तो) —d) Ñ2 D3 4 11 च सु (Ñ2 D6 13 स)-लक्ष्मण, D1 5 7–9 T1 2 G2 M1 शुभ (M1 च स) लक्षण (for च सुलक्षण)

68 V2 B om 68 (cf v l 64) For sequence in Ś1 Ñ1 (illeg) 2 D1–4 8 10 11, cf v l 67 Ś1 om 68ab —a) Ñ2 D6 यस्य, D8 तत्र (for तस्य) Ñ2 D1–4 8 10 11 कार्यव (D8 °र) तो (for वीर्यवतो) —b) Ñ2 D1–3 6 11 सर्वे (for तव) —After 68ab Ñ2 D1–4 8 10 11 ins while Ś1 ins after 67 (due to om)

736* लोकमालोकयन्त्यन्ये हरय संचारिण ।
मासद्वया परे वीरा वेलाया समुपस्थिता ।

[ (l 1) D1 3 4 सह (for सच) D3 संचरस्थिता (for संचारिण) —(l 2) D4 (with hiatus) परे कथेद् D11 परिवारा (for परे वीरा) Ñ2 D6 यथ सर्वे परीवारा (for the prior half) D2 सुवेले, D1 10 वेलया, D11 वेल्या (for वेलाया) Ś1 D10 समवस्थिता (for समुप°) ]

—d) Ś1 Ñ2 D1–4 8 10 11 सपातेर् (Ś1 D10 °ति) (for सुग्रीव)

69 V2 B om 69 (cf v l 64) For sequence in Ś1 Ñ1 (illeg) 2 D1–4 8 10 11, cf v l 67 —a) Ñ2 D1 G3 [ए]वम् (for [इ]यम्) D2 4 मयैव च (D6 स) सहायेन, D11 मयेय सहमा येन —c) D3 M3 om (hapl) दक्षिणा Ś1 Ñ2 D1 3 4 8 10 11 समाक्रान्ता, G1 मनुप्राप्ता (for मनुक्रान्ता) D2 दक्षिणा दिशमाक्रान्ता (sic) —d) M3 विचयैषिणा, Cg as in text (for विचयैषिणा) Ś1 Ñ2 D1–4 8 10 11 देवि त्वामनुमार्गता

70 V2 B om 70 (cf v l 64) For sequence in Ś1 Ñ1 (illeg) 2 D1–4 8 10 11, cf v l 67 —a) Ś1 दिष्ट्याथ, Ñ2 D6 दिष्ट्या हि, D1–4 10 11 दिष्ट्याहं, G2 दृष्ट्वाह (for दिष्ट्याहं) Ñ2 सैन्यानि, D1 3 11 मिहाना, D3 सघाता (for सैन्यानां) —b) Ś1 त्वन्नाशम (sic), D1 त्वन्वदम् (sic) D2 त्वन्नाशयम्, D3 त्वन्नर्थम् (for त्वन्नाशम्) —d) Ś1 Ñ2 D1–4 8 10 11 [अ]भि (D3 4 10 [अ]भि) गमना दृह, D7 9 M3 Crp mp t [अ]भि (M3 [अ]भि) गमना (D3 Crp mp °रा) सनात्, Cm g k as in text (for [अ]भिगमशंसनात्) —After 70 Ś1 Ñ2 D1–4 8 10 11 ins

G 5.32 [illegible] B 5.35 77 L 5.31 15

दिष्ट्या हि न मम व्यर्थं देवि सागरलङ्घनम् ।
प्राप्स्याम्यहमिदं दिष्ट्या त्वद्दर्शनकृतं यशः ॥ ७१
राघवश्च महावीर्यः क्षिप्रं त्वामभिपत्स्यते ।
समित्रबान्धवं हत्वा रावणं राक्षसाधिपम् ॥ ७२
कौरजो नाम वैदेहि गिरीणामुत्तमो गिरिः ।
ततो गच्छति गोकर्णं पर्वतं केसरी हरिः ॥ ७३
स च देवर्षिभिर्दिष्टः पिता मम महाकपिः ।
तीर्थे नदीपतेः पुण्ये शम्बसादनमुद्धरत् ॥ ७४
तस्याहं हरिणः क्षेत्रे जातो वातेन मैथिलि ।
हनूमानिति विख्यातो लोके स्वेनैव कर्मणा ।
विश्वासार्थं तु वैदेहि भर्तुरुक्ता मया गुणाः ॥ ७५

737* दिष्ट्याहं वानरान्सर्वान्हरीणामीश्वरं च तम् ।
दृष्टा देवीति वक्ष्यामि दृष्ट्वा रामं च सानुजम् ।

[(1 2) D11 दिश्वा (sic) (for दृष्टा) D11 विरयाव (for वक्ष्यामि) D1 3 4 8 11 दिश्वा (sic) (for दृष्ट्वा) ]

71 V2 B om 71 (cf v l 64) For sequence in Ś1 Ñ1(illeg) 2 D1-4 8 10 11 cf v l 67 —ᵃ) T G2 M1 3 मम न (by transp) Ś1 D1 4 8 11 च न व्यर्थमिद Ñ2 न व्यर्थकमिद, D8 हि च ममाप्यत्र G1 कृत महाभीम, G3 न मम हि व्यर्थं (for हि न मम व्यर्थं) —ᵇ) Ś1 Ñ2 D1 4 8 10 11 मम G2 इद (for देवि) D7-9 सागरस्येह लघनं —ᶜ) G1 प्रासश्च (for प्राप्स्यामि) Ñ2 D4 8 11 [अ]घ त्व(D11 ह्य)ह (for [अ]हमिद) D7 9 दत्रि (for दिष्ट्या) Ś1 D10 अहं प्राप्स्यामि दिष्ट्याद्य(D10 °मि (sic)) D2 चाद्य प्राप्स्याम्यहं देवि —After 71 Ś1 Ñ2 D1 4 8 10 11 ins

738* तद्धार्थसिद्धि भद्र ते क्षीणदुःखासि मैथिलि ।
[D3 दि (for [अ]सि) Ś1 D4 10 मालिनि (for मैथिलि) ]
—D11 cont

739 यशसा तपसा चैव वीर्येण च विशांपते ।

72 Ś1 V2 B D10 om 72 (for V2 B cf v l 64) For sequence in Ñ1(illeg) 2 D1-3 8 11 cf v l 67 —ᵃ) N2 D8 11 स (for च) Ñ2 D8 G1 महावीर (for °वीर्य) D3 राघव च महावीर्यं (sic) —ᵇ) D4 अभिपश्यते (sic) —D3 om 72ᶜᵈ —ᶜ) D7 9 T1 सपुत्र (for समित्र)

73 V2 om 73 (cf v l 64) Ś1 Ñ1 D1-4 10 11 read 73–75 after 64 —ᵃᵇ) Ś1 Ñ1 D1-4 10 11 कुञ्जरो D4 7 9 G1 M3 Cr m g k t माल्यवान्, T2 कैलासो, G3 कौनञ्जो M1 गोकर्णो (for कौरजो) N2 B D8 गोकर्णो दृश्यते यस्मात्पर्वताद्ध(B2 D8 °तो गं)धमादनात् —After 73ᵃᵇ, Ś1 Ñ1 D2-4 10 11 ins

740* यतो दृश्येत शोकार्त पर्वतो गन्धमादन ।

[Ś1 D2 10 ततो (for यतो) Ś1 Ñ1 D10 [ऽ]दृश्यत D1 4 11 गोपर्वं, D10 शोकोत (for शोकार्त) ]

—ᵇ) Ś1 Ñ B D1-4 8 10 11 तस्माद् (for ततो) B4 गोक णत् —ᵈ) Ñ1 B2 4 D1-4 11 पर्वतात्

74 For sequence in Ś1 Ñ1 D1 4 10 11, cf v l 73 —ᵃ) Ś1 D3 10 11 स तु Ñ1 D2 8 यत्र, Ñ2 V1 B D6 तत्र, T2 स हि (for स च) Ś1 Ñ D7 8 10 T1 जुष्ट, V2 B1 3 4 जुष्ट, B2 दृष्टे, D5 7 8 M2 दिष्ट (for दृष्ट) M1 देवर्षिनिर्दिष्ट (for °भिर्दिष्ट) —ᶜ) Ś1 Ñ V2 B D1-4 10 11 तीर्थे, T2 तीरे (for तीर्थे) T3 नद्यते Ś1 Ñ1 V2 D1 3 10 M3 पुण्य, Ñ2 B D2 8 11 पुण्ये, D4 मुक्त (sic) (for पुण्ये) —ᵈ) Ñ1 D1 2 10 T2 3 शश्च (for शम्ब) T2 3 -साधनम्, M1 -शासनम् (for सादनम्) Ñ1 D1 2 10 उत्तम, D7 8 T1 3 G1 3 M1 Ck t उद्धरन् Cm g as in text (for उद्धरत्) Ś1 D3 11 गन्धमादनमुत्तम, Ñ2 V2 B D6 शम्बमुक्तासनाथवत् D4 शम्ब दानवमुत्तम ‡ Cm g उद्धरत् उद्धरत्, Ck t उद्धरन् उद्धृतवान् अवधीदित्यर्थः । भूतेऽपि लट् शत्रौ ‡ —After 74 N1 ins (1 2 illeg)

**—************** ।

741* त दृष्ट्वा ससलिकान्त दैत्य * नगरूपिणम् ।

75 For sequence in Ś1 Ñ1 D1-4 10 11 cf v l 73 —ᵃ) D7 9 M3 यस्य (for तस्य) Ñ2 V2 B D1 4 8 11 केसरिण (for [अ]हं हरिण) D11 पुत्रो (for क्षेत्रे) Ś1 D1 10 तस्याहं क्षेत्रज पुत्रो, D3 अहं तस्य हरे क्षेत्रे ‡ Cr m g हरिण हरे (Cr m नकारान्तत्वमापम्, केसरिण इत्यर्थः) ‡ —ᵇ) N2 जानकि (for मैथिलि) Ñ2 V2 B D6 जातोहं मातरिश्वना —ᶜ) D1 3 नाम (for इति) B3 D1 व्याख्यातो (for वि°) —ᵈ) D1 ख्यात (for लोके) Ñ1 लोकेह स्वेन, Ñ2 V2 B D2 4 8 प्रकाशः स्वेन (for लोके स्वेनैव) B3 कर्मणा (for कर्मणा) —ᵉ) B2 विज्ञानार्थं B1 3 G हि, D11 च (for तु) Ś1 Ñ1 D2 4 10 ते(Ś1 Ñ1 वै) देवि (for वैदेहि) D1 विश्वासनार्थं ते देवि, D3 तव विश्वासनार्थं तु —ᶠ) Ñ2 V2 B D1 8 पितुर्, D2 om (for भर्तुर्) B4 D11 महागुणा —After 75, Ś1 Ñ V2 B D1-4 8 10 11 ins

742* यथा मां त्वं कपिं रूपक मन्येथा जनकात्मजे ।

[D2 यथा त्वं मा (by transp), D3 यन्मां त्वं तु (for यथा मां त्वं) B2 नान्यथा D1 मन्यते (for मन्येथा) Ñ2 V2 B D6 ना(B2 चा)न्यथेति ह(B1 3 च, B4 D6 हि) (for जनकात्मजे) ]
—Thereafter Ñ2 cont

743* तथा मामभगच्छ त्वं सत्य सत्येन ते शपे ।
—After 742*, Ñ2 V2 B1 2 4 D6 read 5 34 2ᶜᵈ (including star passages) while B3 cont after 742*

एवं विश्वासिता सीता हेतुभिः शोककर्शिता ।
उपपन्नैरभिज्ञानैर्दूतं तमवगच्छति ॥ ७६

अतुलं च गता हर्षं प्रहर्षेण तु जानकी ।
नेत्राभ्यां वक्रपक्ष्माभ्यां मुमोचानन्दजं जलम् ॥ ७७

G. 5. 32. 47
B. 5. 35. 84
L. 5. 31. 19

744* अञ्जना नाम मे माता विख्याता वामरूपिणी ।
तव प्रसादाद्वैदेहि मथुरं गोष्पदं यथा ।
विचरते यथाकामं क्रीडार्थं शिशुरेव च ।
योजनानां सहस्राणि नियतानां शतानि च ।
क्रमिष्यामि यथाकामं किं पुनः शतयोजनम् ।
स मनो गमने वापि गरुडो वा महाजवः ।
पवनो वा समो वापि पूर्वतो वा महाजवः ।
लङ्कामुत्पाद्य सर्वेतु शक्तोऽहं मारुतात्मजः ।
मद्बलं विक्रमं वापि श्रोष्यसे द्रक्ष्यसे भृशम् ।
मत्समो वाधिको वापि कोटिकोटिमहाबलः
महाबला महावीर्या वानराः सन्ति ते भृशम् ।
पर्वतान्स्वकरेणापि चोत्पाट्य विक्षिपेयुतः ।
युद्धे कीटः पतंगो वा रावणोऽयं भविष्यति ।
जिज्ञासार्थं तु वैदेहि किंचिदुक्तं मया बलम् ।

—Thereafter B3 reads 5.34.2cd.

—After 75 D1.7-9 S ins.:

745* अचिराद्राघवो देवि स्वामिनो भवितानघे ।

[D1.7.9 transp. राघवो and स्वामिनो. D7.9 भुव (for [भ]वे.]

76 For sequence in Ñ2 V2 B D6, cf. v.l. 67. Ś1 Ñ1 V1(om. 76cd) D1-4.10.11 read 76–77ab (followed by 746*) before 5.34.6.—a) Ś1 Ñ V2 B D1-4.6.10.11 सा तु, V1 सांति- (for एवं). Ś1 Ñ V B D1-4.6.10.11 तेन; G3 देवी (for सीता).—b) Ś1 D10 चोपशोभि(D10 °द्वेदि)तै ; Ñ1 चापि सांत्विता; Ñ2 V B D6 च नि(B4 सु)दर्शिता; D2.3.4.11 चैव सांत्विता; D5 चोपपादिता (for शोककर्शिता).—Ñ2 V B D6 om. 76cd.—c) D5 चोपपन्नैस्तु (for उप°).—d) D2 नून; D10 युक्तं (for दूत). Ś1 D10 तं चाप्यगच्छत; D2.11 T2 समवा D3 °मि)गच्छत; D4.5.9 G1 M1.2 Ct तमधि(G1 °मि)गच्छति (D4 °त), D1 तमभिमन्यते, D5 कपिमभ्यन्यत; Cr.m g as in text (for तमवगच्छति).

77 For sequence in Ś1 Ñ V B D1-4.6.10.11, cf. v.l. 67 and 76.—a) Ñ2 समृद्धं च; D4 मतुलेन (for मतुलं च). Ś1 D10 सा गता; Ñ V1 B1.2 D2.4.11 G3 M1 चागता; B3 समता; D1 सा ततो, D5 तु गता (for च गता).—b) D5 M2 च (for तु). Ś1 Ñ1 D1-4.10 च (Ś1 D10 [तु]च; D3 (प)व) भामि(Ñ1 °नि)नी (for तु जानकी). Ñ2 V B D6 परां प्रीतिं च भामिनी; D11 प्रहर्षेणैव भामिनी.—After 77ab, Ś1 Ñ V B D1-4.6.10.11 ins.:

746* बाष्पसंरुद्धनयना शिंशपां वासुदेवत ।
दृष्ट्वा च हनुमन्तं सा विनीतं सहवाञ्जलिम् ।
मुमोचानन्दजं वारि गद्गदं मधुराक्षरम् ।
बाष्पसंदिग्धया वाचा शोकहर्षविमिश्रया ।
उवाच मधुरं वाक्यं हरिं हरिणलोचना ।
भजेयं देवताः काले यस्यार्थे प्लवगोत्तम ।
दिष्ट्या जीवति मे भर्ता दिष्ट्या जीवति लक्ष्मणः ।
परितुष्टा चिरात्कृत्वा रामकौशल्ययोः कथाम् ।
लक्ष्मणस्य च वीरस्य प्रार्थयदथ मारुतिम् ।
कपे त्वामभिनन्दामि चिरं जीव सुखी भव ।
सानुजः कुशली भर्ता येन मेऽद्य निवेदितः ।
बलेन यशसा चैव वर्धस्व प्रजया तथा ।

[D4 reads from संरुद्ध in l. 1 up to वाष्प in l. 4 in marg.—(l. 1) B1 -संदिग्ध-; D10 -संबद्ध; D11 -सुरुद्ध- (for -संरुद्ध-). D3 -वदना (for -नयना). D1 मुमोचानन्दजं वारि (for the prior half). Ś1 Ñ1 D1-4.10.11 कपिं तं समुदै(D2.10 °दी)क्षत (for the post. half).—D3 om. l. 2.—(l. 2) Ñ1 तं हनुमन्तं; D1 मां हनूमन्तं (for हनुमन्तं सा) Ś1 D10 मां दृष्ट्वा च हनुमन्, B1 दृष्ट्वा सा च हनुमन्तं (for the prior half). B4 च कृताञ्जलिं (for सहवाञ्जलिम्). D2 विनीतवदुपस्थितम् (for the post. half).—D1 om. l. 3-7. Ñ2 V B D6 om. l. 3.—(l. 3) Ś1 D2.10.11 बाष्पं, Ñ1 वारि (for वारि-).—(l. 4) B4 -गद्गदया (for -संदिग्धया). Ñ2 D6 -विमिश्रित; B2 -विमिश्रिता, B3 -विदीर्णया (for -विमिश्रया).—(l. 5) Ś1 Ñ1 D2-4.10.11 वचनं चेदं (Ñ1 सीता, D2-4 चैव) (for मधुरं वाक्यं). D2.4 सीता (for हरिं).—After l. 5, Ś1 Ñ1 D2(l. 1 only).10.11 ins.:

746(A)* कपिं चैव हनुमन्तं विनीतवदुपस्थितम् ।
परितुष्टा प्रियं श्रुत्वा प्रशशंस पुनः पुनः ।

[N1 om. l. 1.—(l. 1) D2 च (subm.) (for चैव). D11 न हनुमन्तं च (for चैव हनूमन्तं) and नवस्थितं (for उपस्थितम्).]

—(l. 6) B2 पूजयामि, D6 ज्ञेयं (for भजेयं). Ś1 B2 D6 देवता (for देवताः). D4 यत्र (for यस्यार्थे).—(l. 7) D4 om. (hapl.) from जीवति up to दिष्ट्या. Ś1 मे ध्रियते; Ñ1 मे ध्रियते, D3 प्रियः स मे, D10 मे ध्रियते (for जीवति मे). Ś1 D2.10 ध्रियते, D3.4 ध्रियते (for second जीवति).—(l. 8) B3.4 परितुष्टास्मि श्रुत्वा या (B3 मे श्रुत्वा) (for the prior half). Ś1 D10 सीता- (for राम-). Ś1 D2-4.10.11 -कौशल्ययोः (D1.3.4 °मार्क)था.—B4 om. l. 9.—(l. 9) Ś1 [अ]थ (for च). Ś1 Ñ1 D2-4.10.11 प्रशशंस च (for प्रार्थयदथ).—(l. 10) Ñ2 D4 अथ, V2 B कथ (for कपे).—(l. 11) Ñ2 ममनिवेदितः (sic), D4 ते इति°; D11 चाद्य नि° (for मेऽद्य निवेदितः).—Ñ1 illeg. for l. 12.—(l. 12) Ś1 D2-4.10.11 प्रम(D2-4 °ज)दाभि च, B4 प्रमदा तथा; D1 पवनात्मजः (for प्रजया तथा). V2 वर्धय पुत्रजया तथा (hypm.) (for the post. half).]

G 5 37 9 B 5 35 77 L 5 31 15 दिष्ट्या हि न मम व्यर्थं देवि सागरलङ्घनम् ।
प्राप्स्याम्यहमिदं दिष्ट्या त्वद्दर्शनकृतं यशः ॥ ७१
राघवश्च महावीर्यः क्षिप्रं त्वामभिपत्स्यते ।
समित्रबान्धवं हत्वा रावणं राक्षसाधिपम् ॥ ७२
कौरजो नाम वैदेहि गिरीणामुत्तमो गिरिः ।
ततो गच्छति गोकर्णं पर्वतं केसरी हरिः ॥ ७३
स च देवर्षिभिर्दिष्टः पिता मम महाकपिः ।
तीर्थे नदीपतेः पुण्ये शम्बसादनमुद्धरत् ॥ ७४
तस्याहं हरिणः क्षेत्रे जातो वातेन मैथिलि ।
हनूमानिति विख्यातो लोके स्वेनैव कर्मणा ।
विश्वासार्थं तु वैदेहि भर्तुरुक्ता मया गुणाः ॥ ७५

737* दिष्ट्याहं वानरान्सर्वान्हरीणामीश्वरं च तम् ।
दृष्ट्वा देवीति वक्ष्यामि दृष्ट्वा रामं च सानुजम् ।

[ (l 2) D11 दिष्ट्या (sic) (for दृष्ट्वा) D11 विख्यात (for वक्ष्यामि) D1 3 4 8 11 दिष्ट्वा (sic) (for दृष्ट्वा) ]

71 V3 B om 71 (cf v l 64) For sequence in Ś1 Ñ1(illeg) 2 D1–4 6 10 11 cf v l 67 —a) T G2 M1 3 मम न (by transp) Ś1 D1 4 6 11 च न व्यर्थमिदं Ñ2 न व्यर्थकमिदं D8 हि च ममाव्यग्र, G1 कृत्त महाभीम, G3 न मम हि व्यर्थं (for हि न मम व्यर्थं) —b) Ś1 Ñ2 D1 6 8 10 11 मम G3 इह (for देवि) D7–9 सागरस्येह लंघन —c) G1 प्रासश्च (for प्राप्स्यामि) Ñ2 D8 11 [अ]श त्व(D11 ह्य)ह (for [अ]हमिद) D7 9 देवि (for दिष्ट्या) Ś1 D10 अहं प्राप्स्यामि दिष्ट्वाद्य(D10 °मि (sic)) D8 अद्य प्राप्स्यत्यहं देवि —After 71 Ś1 Ñ2 D1–4 6 10 11 ins

738* तदाश्वसिहि भद्रं ते क्षीणदु खासि मैथिलि ।

[ D3 हि (for [अ]सि) Ś1 D8 10 खासिनि (for मैथिलि) ] —D11 cont

739 यशसा तपसा चैव वीर्येण च विशांपति ।

72 Ś1 V3 B D10 om 72 (for V3 B cf v l 64) For sequence in Ñ1(illeg) 2 D1–4 6 11 cf v l 67 —a) Ñ2 D6 11 तु (for च) Ñ2 D6 G1 महावीर (for °वीर्यं) D3 राघव च महावीर्यं (sic) —b) D4 अभिपश्यते (sic) —D3 om 72cd —c) D7 9 T1 सपुत्र (for समित्र)

73 V2 om 73 (cf v l 64) Ś1 Ñ2 D1–4 10 11 read 73–75 after 64 —ab) Ś1 Ñ1 D1–4 10 11 कञ्जरो D6 7 9 G1 M1 Cr m g k t माल्यवान्, T2 कैलासो, G3 कौमजो M1 गोकर्णो (for कौरजो) Ñ2 B D6 गोकर्णो दृश्यते यस्मात्पर्वताद्(B2 D6 °तो य)थमादनात् —After 73ab Ś1 Ñ1 D1–4 10 11 ins

740* यतो दृश्येत गोकर्णे पर्वतो गन्धमादन ।

[ Ś1 D3 10 ततो (for यतो) Ś1 Ñ1 D10 [S]दृश्यत D3 4 11 गोकर्णं, D10 शोकार्ते (for शोकार्ते) ]

—c) Ś1 Ñ B D1 4 6 10 11 यस्माद् (for ततो) B4 गोकर्णात् —d) Ñ1 B1 3 D1 4 11 पर्वतात्

74 For sequence in Ś1 Ñ1 D1–4 10 11, cf v l 73 —a) Ś1 D3 10 11 स तु Ñ1 D3 4 यश्च, Ñ2 V3 B D6 तत्र, T1 स हि (for स च) Ś1 Ñ D3 6 10 T2 जुष्ट, V3 B1 3 4 जुष्ट, B3 दृष्ट, D6 7–9 M3 दिष्ट (for दृष्ट) M1 देवर्षिनिर्दिष्ट (for °भिर्दिष्ट) —c) Ś1 Ñ V3 B D1–4 10 11 तीर्थं, T2 तीरे (for तीर्थे) T3 नदूपते Ś1 Ñ1 V3 D1 3 10 M3 पुण्य Ñ2 B D3 6 11 शुभे, D4 शुभ (sic) (for पुण्ये) —d) Ñ1 D1 2 10 T2 3 शास्त्र (for शम्ब) T2 3 -साधनम्, M1 -सासनम् (for सादनम्) Ñ1 D1 2 10 उत्तमः D7 T1 3 G1 3 M1 Ck t उद्धरन्, Cm g as in text (for उद्धरत्) Ś1 D3 11 गन्धमादनमुत्तमे, Ñ2 V3 B D6 शस्त्रमुक्तासनाधनव, D4 शस्त्र दानवमुत्तमं ✿ Cm g उद्धरत् उदहरत्, Ck t उद्धरन् उद्धृतवान् अवधीदित्यर्थः । भूतेऽपि लट् सन्मार्प ✿ —After 74 Ñ1 ins (l 1 illeg)

* * * * * * * * * * * * * * * * ।

741* स दृष्ट्वा समतिक्रान्त दैत्य * नगरूपिणम् ।

75 For sequence in Ś1 Ñ1 D1–4 10 11 cf v l 73 —a) D7 9 M3 यस्य (for तस्य) Ñ2 V3 B D3 4 6 11 केसरिणि (for [अ]हं हरिणः) D11 पुत्रो (for क्षेत्रे) Ś1 D1 10 तस्याहं क्षेत्रज पुत्रो, D3 अहं तस्य हरेः क्षेत्रे ✿ Cr m g हरिणः हरेः (Cr m नकारान्तत्वमार्षम्, केसरिणः इत्यर्थः) ✿ —b) N1 जानकि (for मैथिलि) Ñ2 V3 B D6 जातोहं मातरिश्वना —c) D1 3 नाम (for इति) B2 D1 व्याख्यातो (for वि°) —d) D1 ख्यात (for लोके) Ñ1 लोकेहं स्वेन, Ñ2 V3 B D3 4 6 प्रकाश स्वेन (for लोके स्वेनैव) B2 वाक्येन (for कर्मणा) —e) B2 जिज्ञासार्थं B1 3 G हि, D11 च (for तु) Ś1 Ñ1 D3 4 10 ते(Ś1 Ñ1 वै) देवि (for वैदेहि) D1 विश्वासनार्थं ते देवि, D3 तत्र विश्वासनार्थं तु —f) Ñ2 V3 B D1 6 पितुर्, D3 om (for भर्तुर्) B2 D11 महागुणा —After 75, Ś1 Ñ V3 B D1–4 6 10 11 ins

742* यथा मा त्वं कपिं व्यक्त मन्येथा जनकात्मजे ।

[ D3 यथा त्वं मा (by transp), D3 यन्ता त्वं तु (for यथा मा त्व) B3 नान्यथा, D3 मन्यसे (for मन्येथा) Ñ2 V3 B D6 ना(B2 चा)न्ययेति ह(B1 3 च, B4 D6 हि) (for जनकात्मजे) ] —Thereafter Ñ1 cont

743* यथा मामवगच्छ त्वं सत्य सत्येन ते शपे ।

—After 742*, Ñ2 V3 B1 3 4 D6 read 5 34 2cd (including star passages) while B2 cont after 742*

एवं विश्वासिता सीता हेतुभिः शोककर्शिता ।
उपपन्नैरभिज्ञानैर्दूतं तमवगच्छति ॥ ७६

अतुलं च गता हर्षं प्रहर्षेण तु जानकी ।
नेत्राभ्यां वक्रपक्ष्माभ्यां मुमोचानन्दजं जलम् ॥ ७७    G. 5. 32. 47 B. 5. 35. 84 L. 5. 31. 19

744* अञ्जना नाम मे माता दिव्याङ्गी कामरूपिणी ।
तव प्रसादाद्वैदेहि समुद्रं गोष्पदं यथा ।
विलङ्घ्ये यथाकामं क्रीडार्थं शिशुरेव च ।
योजनानां सहस्राणि नियतानां शतानि च ।
क्रमिष्यामि यथाकामं किं पुनः शतयोजनम् ।
स मनो गमने वापि गरुडो वा महाजवः ।
पवनो वा समो वापि पृच्छते वा महाजवः ।
लङ्कामुत्पाट्य सनेतुं शक्तोऽहं मारुतात्मजः ।
मद्बलं विक्रमं वापि श्रोष्यसे द्रक्ष्यसे भृशम् ।
मत्समो वाधिको वापि कोटिकोटिगणास्तथा
महाबला महावीर्या वानराः सन्ति ते भृशम् ।
पर्वतान्दक्षकरेणापि घोरपाल्य निःक्षिपेत्पुनः ।
युद्धे कीटः पतंगो वा रावणोऽयं भविष्यति ।
विश्वासार्थं तु वैदेहि किंचिदुक्तं मया वचः ।

—Thereafter B1 reads 5.34.2ᶜᵈ.

—After 75 D5.7–9 S ins.:

745* अचिराद्राघवो देवि स्वामिनो नयिताऽनघे ।

[D5.7.9 transp. राघवो and स्वामिनो. D7.9 भुव (for [अ]नघे.]

76 For sequence in Ñ2 V2 B D6, cf. v.l. 67. Ś1 Ñ1 V1(om. 76ᶜᵈ), D1–4.10.11 read 76–77ᵃᵇ (followed by 746*) before 5.34.6.—ᵃ) Ś1 Ñ V2 B D1–4.6.10.11 सा तु, V1 सान्ति- (for एवं). Ś1 Ñ V B D1–4.6.10.11 तेन; G3 देवी (for सीता).—ᵇ) Ś1 D10 चोपशोभि(D10 °दृशि)ते.; Ñ1 चापि सान्त्विता; Ñ2 V B D6 च नि(B4 सु)दर्शिता; D1.2.4.11 चैव सान्त्विता; D3 चोपपादिता (for शोककर्शिता).—Ñ2 V B D6 om. 76ᶜᵈ.—ᶜ) D3 चोपपन्नैर् (for उप°).—ᵈ) D3 नूनं; D10 श्रुतं (for दूतं). Ś1 D10 त चाप्यगच्छत; D3.11 T2 तमव(D2 °भि)गच्छत, D4.7.9 G1 M1.2 Ct तमधि(G1 °भि)गच्छति (D4 °त), D1 तमभिमन्यते, D5 कपिसमन्यत; Cr.m.g as in text (for तमवगच्छति).

77 For sequence in Ś1 Ñ V B D1–4.6.10.11, cf. v.l. 67 and 76.—ᵃ) Ñ2 सम्पूर्ण च; D4 मतुलेन (for मतुलं च). Ś1 D10 सा गता, Ñ V1 B1.2 D2.4.11 G3 M1 चागता; B3 समगता; D1 सा ततो, D6 तु गता (for च गता).—ᵇ) D6 M3 च (for तु). Ś1 Ñ1 D1–4.10 च (Ś1 D10 [इ]व; D1 [ए]व) भामि(Ñ1 °नि)नी (for तु जानकी). Ñ2 V B D6 पारं प्रीतिं च भामिनी; D11 प्रहर्षाच्चैव भामिनी.—After 77ᵃᵇ, Ś1 Ñ V B D1–4.6.10.11 ins.:

746* बाष्पसंरुद्धनयना शिंशपा बाहुवेक्षणा ।
दृष्ट्वा च हनुमन्तं सा विनीतं सहसाञ्जलिम् ।
मुमोचानन्दजं वारि गद्गदं मधुराक्षरम् ।
बाष्पमदृश्यया वाचा शोकहर्षविमिश्रया ।
उवाच मधुरं वाक्यं हरिं हरिणलोचना ।
यन्नेयं देवताः काले यस्यार्थे प्लवगोत्तम ।
दिष्ट्या जीवति मे भर्ता दिष्ट्या जीवति लक्ष्मणः ।
परितुष्टा चिरात्कृत्वा रामकौशल्यजां कथाम् ।
लक्ष्मणस्य च वीरस्य प्रासमद्य मारुतिम् ।
कपे त्वामभिनन्दामि चिरं जीव सुखी भव ।
सानुजः कुशली भर्ता येन मेऽद्य निवेदितः ।
बलेन यशसा चैव वर्धस्व प्रज्ञया तथा ।

[D2 reads from सद्द in l. 1 up to मार in l. 4 in marg.—(l. 1) B1 -नुदिम-; D10 -सरद; D11 -मुखद- (for -सुरुद्ध). D2 -नदना (for -नयना). D1 मुमोचानन्दजं वारि (for the prior half). Ś1 Ñ1 D1–4.10.11 कपिं तं समुदै- (D2.10 °दी)क्षत (for the post. half).—D3 om. l. 2.—(l. 2) Ñ1 त हनूमत; D1 सा हनूमन (for हनुमन्तं सा) Ś1 D10 सा दृष्ट्वा च हनूमन्तं, B1 दृष्ट्वा सा च हनूमन्तं (for the prior half). B4 च कृताञ्जलिं (for सहसाञ्जलिं). D1 विनीतवदुपस्थितम् (for the post. half).—D1 om. l. 3–7. Ñ2 V B D6 om. l. 3.—(l. 3) Ś1 D3.10.11 बाष्प, Ñ1 वापि (for वारि-).—(l. 4) B3 -गद्गदया (for -संमिश्रया). Ñ2 D6 -विमिश्रित; B2 -विमिश्रिता, B3 -विशीर्णया (for -विमिश्रया).—(l. 5) Ś1 Ñ1 D2–4.10.11 वचनं चेद (Ñ1 सीता; D2–4 चैव) (for मधुरं वाक्यं). D4.6 सीता (for हरिं).—After l. 5, Ś1 Ñ1 D3(l. 1 only).10.11 ins.:

746(A)* कपिं चैव हनूमन्तं विनीतवदुपस्थितम् ।
परितुष्टा प्रियं श्रुत्वा प्रशशंस पुनः पुनः ।

[Ñ1 om. l. 1.—(l. 1) D3 च (subm.) (for चैव). D11 तं हनुमतं च (for चैव हनूमन्तं) and अवस्थितं (for उपस्थितम्).]

—(l. 6) B3 पूजयामि, D6 ज्येष्ठ (for यन्नेयं). Ś1 B2 D4 देवता (for देवताः). D4 यदर्थे (for यस्यार्थे).—(l. 7) D4 om. (hapl.) from जीवति up to दिष्ट्या. Ś1 मे ध्यायते; Ñ1 मे स्निग्धे, D3 प्रिय * मे, D10 मे प्रियते (for जीवति मे). Ś1 D2.10 ध्यायति, D3.4 प्रियति (for second जीवति).—(l. 8) B2.4 परितुष्टास्मि श्रुत्वा या (B4 ते श्रुत्वा) (for the prior half). Ś1 D10 सीता- (for राम-). Ś1 D1–4.10.11 -कौशल्यमत (D1.2.4 °मल्प)र्थां.—B4 om. l. 9.—(l. 9) Ś1 [ए]व (for च). Ś1 Ñ1 D2–4.10.11 प्रशशंसाग्र्य (for प्रासमद्य).—(l. 10) Ñ2 D6 तथ, V2 B कथ (for कपे).—(l. 11) Ñ2 समनिवेदितः (sic), D4 ते श्रुति°; D11 चाद्य नि° (for मेऽद्य निवेदितः).—Ñ1 illeg. for l. 12.—(l. 12) Ś1 D2–4.10.11 प्रम(D2–4 °ज्ञ)यापि च; B4 प्रभया तथा, D1 पवनात्मज (for प्रज्ञया तथा). V2 वर्धय सुप्रज्ञया तथा (hypm.) (for the post. half).]

G 5 32 48 B 5 35 85 L 5 31 20 चारु तच्चाननं तस्यास्ताम्रशुक्लायतेक्षणम् ।
अशोभत विशालाक्ष्या राहुमुक्त इवोडुराट् ।
हनूमन्तं कपिं व्यक्तं मन्यते नान्यथेति सा ॥ ७८
अथोवाच हनूमांस्तामुत्तरं प्रियदर्शनाम् ॥ ७९

हतेऽसुरे संयति शम्बसादने
कपिप्रवीरेण महर्षिचोदनात् ।
ततोऽस्मि वायुप्रभवो हि मैथिलि
प्रभावतस्तत्प्रतिमश्च वानरः ॥ ८०

## इति श्रीरामायणे सुन्दरकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

—Before $77^{cd}$ N3 V2 B D6 ins

747* अथ हर्षपरीताङ्गी बाष्पेण पिहितानना ।
प्रतिजग्राह न वची चक्रे स्निग्धं चैव हि ।
श्रुत्वा च रामसंदेशं दृष्ट्वा चैवाङ्गुलीयकम् ।

[(l 1) V3 B1 3 [अ]पिहित B3 सहित (for पिहित) V3 B1 [आ]मना (for [आ]नना) —(l 2) B3 4 तद् (for न) B4 कृत्वा (for चक्रे) —(l 3) B2 रामस्य (for च राम) V2 [अ]ङ्गुलीयक ]

—D1 om $77^{cd}$ Ś1 N1 D3 3 (repeats after l 2 [1] of 756*) 4 10 11 read $77^{cd}$ after 756* —$^{c}$) Ś1 N V2 B1 2 D2 5 6 10 11 कृष्णता( D3 [first time] 4 °ता )राभ्या B4 अश्रुपूर्णाभ्या( D1 वक्रपक्ष्माभ्या( T3 पद्मपत्राभ्या (for वक्रपक्ष्मान्ताभ्या) —$^{d}$) G3 M1 पत्र (for जलम्) B3 [आ]नन्दमात्मज (for °ज जलम्) —After 77 B3 ins

748* त्वत्र वा आणाम्युन सीता सजीव मन्यते सती ।
मेनेऽस्मित्व शरीरस्य मनसानन्दपूर्णता ।

78 Ś1 N1 D1 4 10 11 om 78 —$^{a}$) D3 7 8 G1 2 M2 तद्वदनं M1 तत्राननं (for तच्चाननं) T3 देव्यास( for तस्यास्) D6 सा तस्य वचनं श्रुत्वा —$^{b}$) D3 [आ] यतेक्षणा —$^{c}$) D6 विशालाक्षी (for °क्ष्या) —For $78^{c-d}$ N2 V3 B D6 subst

749* तस्यास्तद्विमलं वक्त्रं सुदत्या सुगुणैर्युतम् ।
यथा राहुविनिर्मुक्तमभवच्चन्द्रमण्डलम् ।

[(l 1) V2 तु B2 च D6 om (subm) (for तद्) B1 2 सुदत (for सुदत्या) B1 2 स्वगुणैर् (for सुगुणैर्) V2 सुदर स्वगुणैर्युत (for the post half) ]

—Ñ2 V1 B D6 om $78^{ef}$

79 For 79 Ñ2 V3 B D6 subst

750* इति प्रहृष्टमनसं मैथिलीं जनकात्मजाम् ।
उवाच हनुमांस्तत्र पुनः सहर्षवत्वच ।

[B3 om l 1 —(l 1) B4 संहृष्ट (for प्र°) B1 मनसीं —(l 2) V3 संहर्षेन (for संहर्षेवत्) B3 इव (for वच) ]

—After 79 D3 7 8 S ins

751* एवन्तु सर्वमाख्यातं समाश्वसिहि मैथिलि ।
किं करोमि कथं वा ते रोचते प्रतियाम्यहम् ।

[ Ck किं करोमीत्यादि । सर्वमाख्यासमीप्ये स्थौ । प्रतियामि प्रतियास्ये राक्षसमीपम् किं करोमि किं करिष्ये कथं वा ते रोचते चिकीर्षिततयेति शेषः । so also Ct ]

80 Ś1 D1 10 om $80^{ab}$ —$^{a}$) T2 3 शम्बसादने T3 (also) सम्बसाधने M1 शम्बरासने (for शम्बसादने) N V3 B D2 4 8 11 हतो गजो( B1 °तो गतो D6 °तोऽसुरो ) येन स( Ñ1 B4 D2 4 11 च ) गन्धमादने( N1 D3 4 शम्बसादने ) —$^{b}$) M3 हरि (for कपि) Ñ1 येश नाद् B1 D3 4 नोदनात् (for चोदनात्) B4 च दूरदर्शिना (for महर्षिचोदनात्) —$^{c}$) Ś1 D10 मह तु D1 11 ततस्तु (for ततोऽस्मि) Ś1 D2 10 11 [ऽ]स्मि T2 [ऽ]पि (for हि) N V B D2 4 8 तद्( N1 D3 4 °द्वय: )न्वये( N1 °रूपो ) वायुसुतोऽस्मि मैथिलि( N2 D6 जानकि ) —$^{d}$) V3 B1 प्रभावितस् Ś1 V1 D3 4 10 11 प्रतिमोऽस्मि V3 B3 प्रभवश्च G3 सदृशश्च (for प्रतिमश्च) —After 80 Ś1 N V B D1 4 8 10 11 ins

752* ब्रूहि सर्वं हृदयस्थितं ते
मा वै चिरेण स्वमतेन्यरूपे ।
यावद्ब्रवीम्युपमजवेन गत्वा
प्रियं प्रियास्तेऽधिगतेति रामम् ।

[(l 1) Ś1 सीते (for सर्व) Ñ2 B1 3 D4 8 हृद्ये D1–8 11 हृदि यद्( D1 ह ) (for हृद्य ) Ñ2 V1 B1 3 D6 यत् V3 वै B3 D11 च (for ते) B4 हृदय हि यन्मो (for हृदयस्थित ते) —(l 2) Ś1 Ñ1 D10 मा स्म N3 गां * V3 B3 यन्मो D4 स मे (for मा वै) B4 चिरेण गत्वा स्वमतिस्वरूपे Ś1 D10 om l 3 4 —(l 4) Ñ3 ते प्रियतेति V1 B1 तेन गतेति (for तेऽधिगतेति) ]

—Thereafter, N3 V B D6 cont

753* तथा तु सा वायुसुतेन हर्षिता
बभूव सीता परिपूर्णमानसा ।
हतेषु दैत्येषु यथाभवच्छची
भृशं प्रतीता सुरराजविक्रमैः ।

[(l 1) B4 [इ]ति (for तु) —(l 2) B3 परिपूर्ण (l 3) B1 दैन्येषु (for दैत्येषु) B3 छदा (for शची) ]

# ३४

भूय एव महातेजा हनूमान्मारुतात्मजः ।
अब्रवीत्प्रश्रितं वाक्यं सीताप्रत्ययकारणात् ॥ १

वानरोऽहं महाभागे दूतो रामस्य धीमतः ।
रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम् ।
समाश्वसिहि भद्रं ते क्षीणदुःखफला ह्यसि ॥ २

गृहीत्वा प्रेक्षमाणा सा भर्तुः करविभूषणम् ।
भर्तारमिव संप्राप्ता जानकी मुदिताभवत् ॥ ३

चारु तद्वदनं तस्यास्ताम्रशुक्लायतेक्षणम् ।
बभूव प्रहर्षोदग्रं राहुमुक्त इवोडुराट् ॥ ४

ततः सा ह्रीमती बाला भर्तुः संदेशहर्षिता ।
परितुष्टा प्रियं श्रुत्वा प्राशंसत महाकपिम् ॥ ५    G 5 33 0 B 5 36 6 L 5 32 8

Colophon —*Sarga name* Ś1 D1 3 4 10 हनुमद्वाक्य, Ñ1 सीतासमाश्वासे हनुमद्वाक्यं, Ñ2 B3 D8 अंगुली(B3 °री) यकसमर्पणं V B2 अंगुली(B2 °री)यकसमर्पण, B1 4 अंगुरी यकदान, D5 द्विविजये रामवचन, D12 सीतासंभाषण —*Sarga no* (figures words or both) N1 D1 2 4 10 11 om Ś1 Ñ2 B1 2 D8 32 V1 33 V2 23 B3 30 B4 D3 6 7-9 T G M1 2 35 M3 34 —After Colophon G concludes with श्रीरामाय नमः —After Sarga 33 Ś1 Ñ V B D1-4 6 10 11 ins a passage relegated to App I (No 7)

## 34

M3 begins with श्रीरामाय नम

1 V1 om 1-5 V2 B om 1-2ᵇ N2 illeg for 1ᵃ —ᵃ) Ś1 N2 D1-4 6 10 11 भूय(Ś1 अन्य)श्चापि (for भूय एव) —ᵇ) D5 7 8 T1 2 G1 M1 पवनात्मज —ᶜ) Ñ1 प्रभूत, D1-4 6 M3 2 प्रसृत Cv as in text (for प्रश्रित) —After 1, Ś1 Ñ1 (illeg from 67ᶜ up to हि in 2ᵉ) D1-4 10 11 read 5 33 67-72 (Ś1 D10 om 72)

2 V1 om 2 Ñ1 illeg up to हि in 2ᵉ (for both cf v l 1) Ś1 Ñ2 V2 B D1-4 6 10 11 om 2ᵃᵇ (for V2 B cf v l 1) —Ñ2 V2 B D6 read 2ᶜᵈ (including star passages) after 5 33 75 (followed by 742* B3 followed by 742* and 744*) —ᶜ) B3 श्री रामेण (for रामनाम) D10 [आ]कृत, Ck t as in text (for [अ]ङ्कित) B1 इद D8 देवि (for चेद) —ᵈ) Ś1 D3 10 11 दिव्यं पश्य N2 V2 B D6 प्रगृह्णा D3 3 त्वं गृहाण, D4 प्रगृह्णीष्व (for पश्य देवि) —After 2ᶜᵈ, Ñ2 V2 B3 4 (N2 V2 B4 om [hapl]) D1 3 6 11 ins while Ś1 B1 D10 ins before 2ᶜᵈ whereas B2 cont after 755*, while D4 ins after 2

754* सुवर्णस्य सुवर्णस्य सुवर्णस्य च भामिनि ।
प्रेषितं रामचन्द्रेण सुवर्णस्याङ्गुलीयकम् ।

[(1 2) Ś1 न मैथिलि B1 3 D6 11 च भामिनि B2 [अ]ङ्गुली यदं (for च भामिनि) D10 स्ववर्णस्य स्ववर्णस्य स्ववर्णस्यैव मैथिलि —(1 2) D1 4 रामभद्रेण B3 D3 तव रामेण D11 रामदेवेन (for रामचन्द्रेण) B1 रामेण प्रहितं देवि B2 प्रहितं रामभद्रेण D3 4 रामेण प्रेषितं भद्र (for the prior half) D10 स्ववर्णस्य] —B3 D6 cont N2 V2 B1 2 4 D3 7-9 S ins after 2ᶜᵈ

755* प्रत्ययार्थं तवानीतं तेन दत्तं महात्मना ।

[Ñ2 V2 B D6 त्वदभिज्ञानहेतोर्हि (for the prior half) Ñ2 V2 B D6 दत्तं तेन (by transp)]

—Ñ2 V1 B D6 om 2ᵉ-5 —ᵉ) D3 समाश्वसे च (sic)

3 Ñ2 V B D6 om 3 (cf v l 1 and 2) —ᵃᵇ) Ś1 D3 10 तद्, Ñ1 D4 11 त D3 [अ]त्र (for सा) D1 3 11 विभूषित D3 गृहीत्वा प्रेयमाणा तद्भर्तुं करभूषणं (sic) —After 3ᵃᵇ Ś1 N2 D2-4 10 11 ins

756* मुमोच हर्षजं वारि सवीडितमवाङ्मुखी ।
तच्छ्रुत्वा मधुरं वाक्यं सीता रामगुणान्वितम् ।

—Then they all read 5 33 77ᶜᵈ D3 repeating l 2 of 756* and 5 33 77ᶜᵈ after 762* —ᶜ) Ś1 D3 4 10 11 समाप्य, N1 D1 2 7 8 T G2 Ct समाप्त Cg as in text (for °प्राप्ता) —ᵈ) D1 3 समभन्यत (for मुदिताभवत्)

4 Ñ2 V B D6 om 4 (cf v l 1 and 2) —ᵃ) T1 तच्चारु वदनं (by transp) —N1 illeg for 4ᵇ —ᵇ) D1 मुक्त, D3 -युक्त (for -शुक्ल) Ś1 D1 3 4 10 11 [अ]सित, D2 सित (for [आ]यत) Ś1 D11 [इ]क्षणा (sic) —ᶜ) D7 8 T2 Ck t हर्षोदग्र(D3 °ग्र) च(T3 *) T1 2 हर्षितोदग्र (for प्रहर्षोदग्रं) Ś1 D1-4 10 11 हर्षोदग्र(D1 3 °ग्र, D11 ततो हर्षो) बभूवाथ N2 यथा राहुविनिर्मुक्ता D1 M3 अशोभत विशालाक्ष्या ॥ Cr. बभूव हर्षादग्रमित्यत्र स्वरभक्ति पृथग्वर्णतया पद्यपूरणाय पाठ्या । Ct 'बभूव हर्षादग्रं च ' इति पाठ ॥ —N1 illeg for 4ᵈ —ᵈ) D10 -ग्रस्त (for मुक्त) D11 इवोडुपान् (sic) (for इवोडुराट्) D3 राहु मुक्तमिवेन्दुराट्, D1 राहुमुक्तेन्दुमण्डल

5 N2 V B D6 om 5 (cf v l 1 and 2) —ᵇ) D1 3 भर्त्रभिज्ञान (for भर्तुः संदेश) Ś1 D10 भर्तृव्यसन कर्षिता Ñ1 D3 4 11 भर्तुः शोकेन कर्षि(D4 पीडि)ता —After 5ᵃᵇ, Ś1 Ñ1 (illeg) D1-4 10 11 ins

757* ददृशे शोकहर्षाभ्यां मुदिता वाक्यमब्रवीत् ।

G. 5 33 21
B. 5 36 7
L. 5 32 9

विक्रान्तस्त्वं समर्थस्त्वं प्राज्ञस्त्वं वानरोत्तम ।
येनेदं राक्षसपदं त्वयैकेन प्रधर्षितम् ॥ ६
शतयोजनविस्तीर्णः सागरो मकरालयः ।
विक्रमश्लाघनीयेन क्रमता गोष्पदीकृतः ॥ ७
न हि त्वां प्राकृतं मन्ये वानरं वानरर्षभ ।
यस्य ते नास्ति संत्रासो रावणान्नापि संभ्रमः ॥ ८
अर्हसे च कपिश्रेष्ठ मया समभिभाषितुम् ।
यद्यसि प्रेषितस्तेन रामेण विदितात्मना ॥ ९
प्रेषयिष्यति दुर्धर्षो रामो न ह्यपरीक्षितम् ।
पराक्रममविज्ञाय मत्सकाशं विशेषतः ॥ १०
दिष्ट्या च कुशली रामो धर्मात्मा धर्मवत्सलः ।
लक्ष्मणश्च महातेजाः सुमित्रानन्दवर्धनः ॥ ११
कुशली यदि काकुत्स्थः किं नु सागरमेखलाम् ।
महीं दहति कोपेन युगान्ताग्निरिवोत्थितः ॥ १२

---

[ Ś1 हर्षशोकाभ्यां (by transp ) D2 3 काम° (for शोक हर्षाभ्यां ) D1 3 जानकी D2 दृष्ट्वा D4 11 हर्षिता D12 दृषिता ( for मुदिता ) ]

—Thereafter, Ś1 Ñ1 (illeg for all except 45$^{cd}$) D1-4 10 11 read 12, 13 and 45 (including star passages) —Ś1 Ñ1 D1-4 10 11 om 5$^{cd}$ —$^{c}$) D5 7-9 T2 M2 3 Cv r m g t कृत्वा (for श्रुत्वा) —$^{d}$) D5 7 9 M3 प्रशशंस

6 Before 6 Ś1 Ñ1 V1 (om 76$^{cd}$) D1-4 10 11 read 5 33 76-77$^{ab}$ (including star passage) while Ñ2 V3 B D6 read 5 33 67-72 (V3 B om 67-72), 76$^{ab}$ and 77$^{ab}$ (including star passages) before 6 —$^{a}$) D3 महाप्राज्ञ , D1-3 G1 समर्थश्च (for समर्थस्त्व) —$^{b}$) Ñ2 V3 B1 2.4 D6 प्लवगर्षभ B3 समर्थो भव सर्वदा —$^{cd}$) G1 पुर (for पद) Ś1 Ñ1 V2 D1 2 4 10 11 येनाय रक्षसा(D10 °सो) शासस्, Ñ2 V1 B1 3 4 D6 8 येनाय राक्षसा शासस् (for °) D10 मयैकेन (sic) Ś1 Ñ V B1 2 4 D1-4 6 10 11 प्रध(D2 °क)र्षित (for प्रधर्षितम्) B3 येनाद्य राक्षसारामे त्वयागत्य निवेदिता —After 6, B3 ins

758* अद्य परं मद्‌कार्यं क करिष्यति शान्तिक ।

7 $^{a}$) D2 विस्तीर्णं —$^{b}$) Ñ2 V B D6 च महोदधि (for मकरालय ) D2 सागर मकरालय —$^{c}$) Ñ2 V B (B2 m ) D6 विक्रमै (B3 also °मे) D4 विक्रम्य (for विक्रम ) —$^{d}$) B1 D3 11 क्रामता, Ck t as in text

8 $^{a}$) D5 त्वा —$^{b}$) D1 3 प्लवगोत्तम, D11 G3 वानरो त्तम —$^{c}$) Ñ2 V B D6 (ए)व (for (अ)हित) —$^{d}$) Ś1 Ñ1 D7-10 Ct अपि, Ñ2 V B1 3 D3 4 6 न च, B2 नैव, B4 च न, D5 नाहित, T2 नाति (for नापि) B3 सभय , D5 वि° (for संभ्रम )

9 $^{a}$) Ś1 B2 D1 3 10 अर्हसि, T1 हर्षसे (sic), Cr m g k t as in text (for अर्हसे) Ś1 Ñ2 V B3 4 D1 3 6 10 त्व (for च) —$^{b}$) Ś1 Ñ V1 B1 3 4 D1-4 6 10 11 G3 M1 2 समभिभाषण —$^{c}$) Ś1 Ñ1 D10 11 परीक्ष्य, Ñ2 V B D6 यस्मात्त्व( B1 2 °स्स ), D2 4 G3 यदासि, D3 यदाहसि, D4 यद्यसि , D5 M2 3 Cr m g यद्यपि, Ck t as in text (for यद्यसि) ॐ Cr अव्ययानामनेकार्थत्वादत्र यद्यपीति निपात समुदायोऽवधारणे वर्तते।, so also Cg ॐ —$^{d}$) B4 परमात्मना

10 $^{a}$) Ś1 Ñ2 V B D1 2 4 6 10 मेधावी (for दुर्धर्षो) —D10 om (hapl ) from 10$^{b}$ up to the prior half of l 1 of 759* —$^{b}$) Ś1 Ñ1 D1-4 11 न रामो (by transp ) V2 (अ)भ्युपवीक्षितु, D6 ह्यपवीक्षित, D11 °क्षता (sic) (for ह्यपरीक्षितम्) —$^{c}$) D4 इति रामम् (sic) (for पराक्रमम्) B4 परिज्ञाय, D11 स विज्ञाय (for अवि°) —$^{d}$) Ñ2 V B D6 मत्समीप(D6 °पे) —After 10 Ś1 Ñ V2 D1-4 6 10 11 ins

759* अग्निमुखो नाम मेधावी राक्षसो वृद्धसमत ।
तद्वाक्यादवगच्छामि रामसुग्रीवयोरहम् ।
सख्यं वालिवधं चैव सुग्रीवैश्वर्यमेव च ।
कपिराघवसबन्धत्वं च दूतमवेक्ष्यहम् ।

[(l 1) D10 om the prior half Ś1 वृद्धसमत , Ñ1 D1 वृद्ध(Ñ1 ** [illeg ])सत्तम Ñ2 दृढसंमत , V1 ** समत —(l 2) Ś1 D10 अपि V2 अपि D3 तव (for अव ) D2 तद्वाक्येनाभिजानामि (for the prior half) —(l 3) D1 -वधस्त इ (for -वध चैव ) —Ñ2 D6 om l 4 —(l 4) Ś1 D10 कपे, Ñ1 हरि (for कपि ) D1 3 सबाधाव् D11 सबध (for सबन्धात्) ]

11 $^{a}$) Ś1 D3 8 10 T2 G2 3 M1 तु, D2 4 11 तु (for च) —$^{b}$) Ñ2 D6 धर्मज्ञो (for धर्मात्मा) D7 9 M3 सत्यसंगर , D5 T G M1 2 सत्यवत्सल —$^{d}$) V B D6 G M1 2 सुमित्रानंदि —After 11, Ś1 Ñ1 D1 (preceded by 769*) 2-4 10 11 read 22$^{cd}$

12 Ñ2 V B D6 om 12-13 Ś1 Ñ1 (illeg ) D1-4 10 11 read 12, 13 and 45 after 5$^{ab}$ (preceded by 757*) —$^{a}$) D10 कुशले (sic) —$^{b}$) Ś1 D1-4 10 11 Cg p t न, Cr g k as in text (for नु) ॐ Cr कुशली यदि काकुत्स्थ किं नु सागरमेखलामिति पाठ . ॐ —$^{c}$) Ś1 D1-4 10 11 लंका, Cg k t as in text (for महीं) —$^{d}$) D3 reads from क्षा up to त in marg

